بهید استتی متعلق اسکند پرتهم ادهیاء ۵

## ॐश्रीगणेशायनमः श्रीभुवनेश्वर्य्यैनमः

## प्रथमस्कंध १ पंचमाध्यायस्तुतिः ५

सर्वचैतन्यरूपांतामाद्यांविद्यांचधीमहि बुद्धिंयानःप्रचोदयात् १ ÷

## १ प्रथमस्कंधे पंचमाध्याये ५ वेदस्तुतिः

**वेदाऊचुः** नमोदेविमहामायेविश्वोत्पत्तिकरेशिवे निर्गुणेसर्वभूतेशिमातःशंकर
कामदे १ त्वंभूमिःसर्वभूतानांप्राणःप्राणवतांतथा धीःश्रीःकांतिःक्षमाशांतिःश्रद्धामेधा
धृतिःस्मृतिः २ त्वमुद्गीथेर्द्धमात्रासिगायत्रीव्याहृतिस्तथा जयाचविजयाधात्रीलज्जाकीर्त्तिः
स्पृहादया ३ त्वांसंस्तुमोंबभुवनत्रयसंविधानदक्षां दयारसयुतांजननींजनानां विद्यांशि
वांसकललोकहितांवरेण्यांवाग्बीजवासनिपुणांभवनाशकर्त्रीम् ४ ब्रह्माहरःशौरिसह
स्रनेत्रवाग्वह्निसूर्याभुवनाधिनाथाः तेत्वत्कृताःसंतिततोनमुख्यामातायतस्त्वंस्थिरजं
गमानां ५ सकलभुवनमेतत्कर्तुकामायदात्वं सृजसिजननिदेवान्विष्णुरुद्राजमुख्या
न् स्थितिलयजननंतैःकारयस्येकरूपा नखलुतवकथंचिद्देविसंसारलेशः ६ नतेरू
पंवेत्तुंसकलभुवनेकोपिनिपुणो ननाम्नांसंख्यातेकथितमिहयोग्योस्तिपुरुषः यदल्पं
कीलालंकलयितुमशक्तःसतुनरः कथंपारावारंकलनचतुरःस्याद्धतमतिः ७ नदेवा
नांमध्येभगवतितवानन्तविभवं विजानात्येकोपित्वमिहभुवनैकासिजननी कथंमिथ्या
विश्वंसकलमपिचैकारचयसि प्रमाणंचैतस्मिन्निगमवचनंदेविविहितं ८ निरीहैवासि
त्वंनिखिलजगतांकारणमहो चरित्रंतेचित्रंभगवतिमनोमेव्यथयति कथंकारंवाच्यःस
कलनिगमागोचरगुण प्रभावःस्वयस्मात्त्वयमपिनजानासिपरमं ९ नकिंजानासित्वंज
ननिमधुजिन्मौलिपतनं शिवेकिंवाज्ञात्वाविविदिषसिशक्तिंमधुजितः हरेःकिंवाम्भसिदुरि

ततनिरेषावलवमी भवत्याप्रादाङ्गभजननिपुणोक्कास्तितुरितं १० उपेक्षा किंचेयमनवद्य रसमूढेतिविषमा हरेर्मूर्छानाशोमतमिहमहाश्चर्यजनकं महद्दुःखंमातस्त्वमसिजन नच्छेदकुशला नजानामोमोलेर्दिवरनविलंबःकथमभूत् ११ ज्ञात्वादोषंसकलसुर तापादितंदेविचित्ते किंवाविष्णावमरजनितंतुष्कृतंपातितंते विष्णोर्वाकिंसमरजनि तःकोपिगर्वोतिवेगा व्यर्थंतुमातस्तवविलसितंनैवविद्मोत्रभावं १२ किंवादैत्यैःसमर विजितैस्तीर्थदेशेसुरम्ये घोरंतप्ताभगवतिवरंलब्धवद्भिर्भवत्याः श्रेतद्ध्यानंगमितम धुनाविष्णुशीर्षंभवानि इष्टुंकिंवाविगतशिरसंवासुदेवंविनोद १३ सिंधोःपुत्र्यारोषि ताकिंत्वमाद्येकस्मादेनांप्रदहसिनाथहीनां दौनत्यक्त्वेस्वांशजानापराधोव्युत्थाप्यैनंमो दितांमांकुरुष्व १४ एतेसुरास्त्वांसततंनमंतिकार्येषुमुख्याःप्रथितप्रभावाः शोका र्णवात्तारयदेविदेवानुत्थाप्यदेवंसकलाधिनाथं १५ मूर्छागतःकोवहरेर्नविद्मोना न्योस्त्युपायःखलुजीवनेद्य यथासुधाजीवनकमेतदानयज्जगज्जीवितदासिदेवि १६

**सूतउवाच** एवंस्तुतातदादेवीगुणातीतामहेश्वरी प्रसन्नापरमामायावेदैःसां गैःसमंगैः १७ तानुवाचतदावाणीचाकाशस्थाशरीरिणी देवान्प्रतिसुखैःशब्दैर्जना नंदकरीशुभा १८ माकुरुध्वंसुराश्चिंतांस्वस्थास्तिष्ठतचामराः स्तुताहंनिगमैःकामंसं तुष्टास्मिनसंशयः १९ यःपुमान्मानुषेलोकेस्तोत्रेणैनंमामकंकीर्त्तनं पठिष्यतिसदाभ क्त्यासर्वान्कामानवाप्नुयात् २० श्रृणोतिवास्तोत्रमिदंमदीयंभक्त्यात्रिकालंसततंनरोयः विमुक्तदुःखःसभवेत्सुखीचवेदोक्तमेतन्ननुवेदतुल्यं २१ **इतिश्रीदेवीभागव तेमहापुराणेप्रथमस्कंधेपंचमेध्यायेवेदस्तुतिःसमाप्तम्**

برہم استتی اسکندستم ادھیا

## १ प्रथमस्कंधसप्तमाध्याय ७ ब्रह्मस्तुतिः

इतिश्रुत्वामतिंब्रह्मापद्मनालस्थितस्तदा तस्यावयोगनिद्रांतांविष्णोरंगेषुसंस्थि

तो १ श्रीब्रह्मोवाच देवि त्वमस्य जगतः किल कारणं हि ज्ञातं मया सकलवेदवचो
भिरंब यद्विष्णुरप्यखिललोकविवेककर्त्ता निद्रावशं च गमितः पुरुषोत्तमोऽद्य २ को वेद ते ज
ननि मोहविलासलीलां मूढोऽस्म्यहं हरिरयं विवशश्च शेते ईदृक्कृतया सकलभूतमनोनि
वासे विद्वत्तमो विबुधकोटिषु निर्गुणायाः ३ सांख्या वदंति पुरुषं प्रकृतिं च यां त्वं चैतन्य
भावरहितां जगतश्च कर्त्रीं किं तादृशासि कथमत्र जगन्निवासश्चैतन्यताविरहितो विहि
तस्त्वयाऽद्य ४ नाट्यं तनोषि सगुणा विविधप्रकारं नो वेत्ति कोऽपि तव कृत्यविधानयोगं ध्या
येन्नियं मुनिगणा नियतं त्रिकालं संध्येति नाम परिकल्प्य गुणान्भवानि ५ बुद्धिर्हि बोध
करणा जगतां सदा त्वं श्रीश्चासि देवि सततं सुखदा सुराणां कीर्तिस्तथा मतिधृती कि
ल कांतिरेव श्रद्धा रतिश्च सकलेषु जनेषु मातः ६ नातः परं किल वितर्कशतैः प्रमाणं
प्राप्तं मया यदिह दुःखगतिं गतेन त्वं चात्र सर्वजगतां जननीति सत्यं निद्रालुतां वितरता ह
रिणाऽत्र दृष्टं ७ त्वं देवि वेदविदुषामपि दुर्विभाव्या वेदोऽपि नूनमखिलार्थतया न वेद यस्मा
त्त्वदुद्भवमसौ श्रुतिराप्नुवाना प्रत्यक्षमेव सकलं तव कार्यमेतत् ८ कस्ते चरित्रमखिलं भुवि
वेद धीमान् नाहं हरिर्न च भवो न सुरास्तथान्ये ज्ञातुं क्षमाश्च मुनयो न ममात्मजाश्च दुर्वाच्य
एव महिमा तव सर्वलोके ९ यज्ञेषु देवि यदि नाम न ते वदंति स्वाहेति वेदविदुषो हवने कृते
ऽपि न प्राप्नुवंति सततं मखभागधेयं देवास्त्वमेव विबुधेष्वपि वृत्तिदासि १० त्राता वयं भगव
ति प्रथमं त्वया वै देवारिसंभवभयादधुना तथैव भीतोऽस्मि देवि वरदे शरणं गतोऽस्मि घोरं
निरीक्ष्य मधुना सह कैटभं च ११ नो वेत्ति विष्णुरधुना मम दुःखमेतज्जाने त्वया सुविवशीकृ
तदेहयष्टिः मुंचादिदेवमथवा जहि दानवेंद्रौ यद्रोचते तव कुरुष्व महानुभावे १२ जानंति
ये न तव देवि परं प्रभावं ध्यायंति ते हरिहरावपि मंदचित्ताः ज्ञातं मयाऽद्य जननि प्रकटं प्रमा
णं यद्विष्णुरप्यतितरां विवशोऽथ शेते १३ सिंधूद्भवापि न हरिं प्रतिबोधितुं वै शक्ता पतिं त
व वशानुगमद्य शक्त्या मन्ये त्वया भगवति प्रसभं रमापि प्रस्वापिता न बुबुधे विवशीकृतेव १४
धन्यास्त एव भुवि भक्तिपरास्तवांघ्रौ त्यक्त्वान्यदेवभजनं त्वयि लीननभावाः कुर्वंति देवि

भजनंसकलंनिकामंज्ञात्वासमस्तजननीकिलकामधेनुं १५ धीकांतिकीर्तिशुभवृत्तिगु
णादयस्तेविष्णोर्गुणास्तुपरिहृत्यगताः क्वचाद्य बंदीकृतोहरिरसौननुनिद्रयात्रशक्त्यानवैव
भगवत्यतिमानवत्याः १६ त्वंशक्तिरेवजगतामखिलप्रभावात्वन्निर्मितंचसकलंखलुभाव
मात्रं त्वंक्रीडसेनिजविनिर्मितमोहजालेनास्येयथाविहरतेस्वकृतेनरोवै १७ विष्णुस्त्वयात्र
कृतिनःप्रथमंयुगादौदत्ताचशक्तिरमलाखलुपालनाय त्रातंचसर्वमखिलंविवशीकृतोद्य
यद्वोचनेतनवनयांबकरोषिनूनं १८ सृष्ट्यात्रमांभगवतिप्रविनाशितंचेन्नेच्छासितेकुरुदयां
परिहृत्यमौनं कस्मादिमौप्रकटितौकिलकालरूपौयद्वाभवानिहसितंनुकिमिच्छसेमां १९
ज्ञातंमयातवविचेष्टितमद्भुतंवैकृत्वाखिलंजगदिदंरमसेस्वतंत्रा लीनंकरोषिसकलंकि
लमांतथैवहंतुंत्वमिच्छसिभवानिकिमत्रचित्रं २० कामंकुरुष्ववधमद्यममैवमातर्दुःखं
नमेमरणजंजगदंबिकेत्र कर्तात्वयैवविहितःप्रथमंसचायंदैत्याहतोयमृतइत्यपिशोग
रिष्ठं २१ उत्तिष्ठदेविकुरुरूपमिहाद्भुतंत्वंमांवाथवाजहियथेच्छसिबाललीले नोचे
त्प्रबोधयहरिंनिहनेदिमौयस्त्वात्साध्यमेतदखिलंकिलकार्यजातं २२ **सूतउवा
च**॰ एवंस्तुतातदादेवीतामसीतत्रवेधसा निःसृत्यहरिदेहात्तुसंस्थितापार्श्वतस्तदा २३
त्यक्त्वांगानिचसर्वाणिविष्णोरतुलतेजसः निर्गतायोगनिद्रासानाशायचतयोस्तदा २४
विस्पंदितशरीरोसौयदाजातोजनार्दनः धातापरिमिकांप्राप्तोमुदंदृष्ट्वाहरिंततः २५

**इतिश्रीदेवीभागवतेमहापुराणेप्रथमस्कंधेसप्तमेध्यायेब्रह्म
स्तुतिःसमाप्तम्** ॐ

سُہن آستی پر تہم اسکند دوادش ادہیار

## अथस्तद्युम्नस्तुतिः

## १ प्रथमस्कंधे द्वादशोध्याये १२

गत्वातस्मिन्वनेरम्येनानाद्रुमलताकुले नारदान्मंत्रमासाद्यनवाक्षरमनुत्तमं १ अभ्या

पमेत्रमत्यर्थप्रेमभरितमानसः परितुष्टातदादेवीसगुणानारिणीशिवा २ सिंहारूढा
स्थिताचाग्रेदिव्यरूपमनोरमा वारुणीपानसंमत्तामदाघूर्णितलोचना ३ दृष्ट्वातांदिव्य
रूपांचप्रेमाकुलितलोचनः प्रणम्यशिरसाप्रीत्यातुष्टावजगदंबिकां ४ इलोवाच.
दिव्यंचतेभगवतिप्रथितंस्वरूपंदृष्टंमयासकललोकहितानुरूपं वंदेत्वदंघ्रिकमलंस
रसंघसेव्यंकामप्रदंजननिचापिविमुक्तिदंच ५ कोवेत्तितेवभुविमर्त्यतनुर्निकामंमुह्य
तियत्रमुनयश्चसुराश्चसर्वे ऐश्वर्यमेतदखिलंनृपणोदयांचहृष्टैववेदेविसकलंकिलविस्म
योमे ६ शंभुर्हरिःकमलजोमघवारविश्च वित्तेशवह्निवरुणाःपवनश्चसोमः जानं
तिनैववसवोपिहितेप्रभावंबुध्येत्कथंनवगुणानगुणोमनुष्यः ७ जानातिविष्णुरमि
तद्युतिरंवसाक्षात्त्वांसात्वकीमुदधिजांसकलार्थदांच कोराजसींहरउमांकिलतामसीं
त्वांवेदांबिकेनतपुनःखलुनिर्गुणांत्वां ८ क्वाहंसुमंदमतिरप्रथितप्रभावःकोयंतवातिनि
पुणोमयिसुप्रसादः जानेभवानिचरितंकरुणासमेतंयत्सेवकांश्चदयसेत्वयिभावयुक्ता
न् ९ वृत्तस्त्वयाहरिरसौवनजेशयापिनैवाचरत्यपिमुदंमधुसूदनश्च॥पादौतवादिपुरु
षःकिलपावकेनकृत्वाकरोतिचकरेणशुभौपवित्रौ १० वांछत्यहोहरिरशोकइवातिका
मंपादाहतिंप्रमुदितःपुरुषःपुराणः तत्वंकरोषिकुषिताप्रणतंचपादेदृष्टापतिंसकल
देवनुतंस्मरार्तं ११ वक्षस्थलेवससिदेविसदेवतस्यपर्यंकवत्सुचरितेविपुलेतिशांते
सौदामिनीवतघनेसुविभूषितेचकिंतेनवाहनमसौजगदीश्वरोपि १२ त्वंचेज्जहासिम
धुसूदनमंबकोपान्नैवार्चितोपिसभवेत्किलशक्तिहीनः प्रत्यक्षमेवपुरुषंस्वजनास्त्यजंति
शांतंस्त्रियोपिनमतीवगुणैर्वियुक्तं १३ ब्रह्मादयःसुरगणाननकिंयुवत्योयेत्वत्पदांबुजम
हर्निशमाश्रयंति मन्येत्वयैवविहिताःखलुतेपुमांसःकिंवर्णयामितवशक्तिमनंतवीर्ये १४
त्वंनापुमान्नचपुमानितिमेविकल्पोयाकासिदेविसगुणाननुनिर्गुणावा तांत्वांनमामिस
ततंकिलभावयुक्तोवांछामिभक्तिमचलांत्वयिमातरंते १५ सूतउवाच इतिस्तु
त्वामहीपालोजगामशरणंतदा परितुष्टाददौदेवीतत्रसायुज्यमात्मनि १६ सद्युम्न

स्तुततः श्रीपदपदं परमकं स्थिरं तस्या देव्याः प्रसादेन मुनीनामपि दुर्लभम् १८ इतिश्री देवीभागवते महापुराणे प्रथमस्कंधे द्वादशेऽध्याये सुद्युम्नकृतास्तुतिः समाप्तम् ❖

## इतिप्रथमस्कंधस्तुतयः

بیاس کرت استتی اسکند ۲ - ادھیاے ۷ - صفحہ ۵۸

## अथद्वितीयस्कंधस्तुतिप्रारंभः

## द्वितीयस्कंधेसप्तमेऽध्यायेव्यासकृतस्तुतिः

एवंविधानि वाक्यानि श्रुत्वा सत्यवतीसुतः प्राणायामेन तः कृत्वा दध्यौ देवीं सनातनीम् १ संध्याकालेथ संप्राप्ते गंगायां मुनिसत्तमः सर्वांल्लोकान्समाहूय युधिष्ठिरपुरोगमान् २ तुष्टाव विश्वजननीं स्नात्वा पुण्ये सरिज्जले प्रकृतिं पुरुषारामां सगुणां निर्गुणां तथा ३ देवदेवीं ब्रह्मरूपां मणिद्वीपाधिवासिनीं ४ **व्यासउवाच** यदा न वेधा न च विष्णुरीश्वरो न वासवो नैव जलाधिपस्तथा न वित्तपो नैव यमश्च पावकस्तदासि देवि त्वमहं नमामि तां ५ न सन्न वायुर्न धरा न चांबरं गुणा न तेषां च न चेंद्रियाण्यहं मनो न बुद्धिर्न च तिग्मगुः शशी तदासि देवि त्वमहं नमामि तां ६ इमं जीवलोकं समाधाय चित्ते गुणैर्लिंगकोशं च नीत्वा समाधौ स्थिता कल्पकालं नयस्यात्मनेत्थं न कोप्यस्ति वेत्ता विवेकं गतोपि ७ प्रार्थयत्येष मां लोको मृतानां दर्शनं पुनः नाहं समोस्मि मातस्त्वं दर्शयाशु जनान्मृतान् ८ **सूतउवाच** एवं स्तुता तदा देवी माया श्रीभुवनेश्वरी स्वर्गाद्दागत्य सर्वांश्च दर्शयामास पार्थिवान् ९ हृष्टाः कुंती च गांधारी सुभद्रा च विराटजा पांडवाश्च मुदुः सर्वे वीक्ष्य प्रत्यागतान्स्वकान् १०

**इतिश्रीदेवीभागवते महापुराणे द्वितीयस्कंधे सप्तमेऽध्याये व्यासकृतास्तुतिः समाप्तम्** ❖

بشنوکرت استتی اسکند ۳ - ادھیا ۴ - صفحہ ۸

# अथतृतीयस्कंधस्तुतिप्रारम्भः

## तृतीयस्कंध चतुर्थाध्याय विष्णुकृतास्तुतिः

एकदातांमहादेवींदेवींश्रीभुवनेश्वरीं तुष्टावभगवान्विष्णुर्युवतीभावसंस्थितः १ श्री
**भगवानउवाच** नमोदेव्यैप्रकृत्यैचविधात्र्यैसततंनमः कल्याण्यैकामदायैचवृद्ध्यै
सिद्ध्यैनमोनमः २ सच्चिदानंदरूपिण्यैसंसारारण्यैनमः पंचकृत्यविधात्र्यैतेभुवनेश्यैन
मोनमः ३ सर्वाधिष्ठानरूपायैकूटस्थायैनमोनमः अर्धमात्रार्थभूतायैहृल्लेखायैनमोनमः
ज्ञातंमयाखिलमिदंत्वयिसन्निविष्टंत्वत्तोस्यसंभवलयावपिमातरद्य शक्तिश्चतेस्यकरणेवि
ततप्रभावाज्ञाताधुनासकललोकमयीतिनूनं ५ विस्तार्य्यसर्वमखिलंसदसद्विकारंसंदर्श
यस्यविकलंपुरुषायकाले तत्वैश्चषोडशभिरेवचसप्तभिश्चभासीन्द्रजालमिवनःकिलरंज
नाय ६ नत्वामपास्यकिमपिवस्तुगतंविभातिव्याप्यैवसर्वमखिलंत्वमवस्थितासि शक्तिंवि
नाव्यवहृतोपुरुषोप्यशक्तोवंभण्यतेजननिबुद्धिमताजनेन ७ प्रीणासिविश्वमखिलं
सततंप्रभावैःस्वैस्तेजसाचसकलंप्रकटीकरोषि अत्स्येवदेवितरसाकिलकल्पकालेको
वेददेवचरितंतववैभवस्य ८ त्रातावयंजननितेमधुकैटभाभ्यांलोकाश्चतेसुवितताःख
लुदर्शितावै नीताःसुखस्यभवनेपरमांचकोटिंयद्दर्शनंतवभवानिमहाप्रभावं ९ नाहंभ
वोनचविरिंचिर्विवेदमातःकोन्योहिवेत्तिचरितंतवदुर्विभाव्यं कानीहसंतिभुवनानिमहाप्र
भावेह्यस्मिन्भवानिरचितेरचनाकलापे १० अस्माभिरत्रभुवनेहरिरन्यएवदृष्टःशिवःक
मलजःप्रथितप्रभावः अन्येषुदेविभुवनेषुनसंतिकिंतेकिंविद्मदेविविततंतवसुप्रभावं ११
याचेंबतेंघ्रिकमलंप्रणिपत्यकामंचित्तेसदावसतुरूपमिदंतवैतत् नामापिवक्त्रकुहरेस
ततंतवैवसंदर्शनंतवपदांबुजयोःसदैव १२ भृत्योयमस्तिसततंमयिभावनीयंत्वांस्वामि
नीतिमनसाननुचिंतयामि एषावयोरविरताकिलदेविभूयाद्व्याप्तिःसदैवजननीसुतयो

रितार्थे १३ ब्रह्मासृजत्यवतिविष्णुरुमापतिश्च संहारकारकइयंतुजनेप्रसिद्धिः किंस
त्यमेतदपिदेविनवेद्मियावैकर्त्तृत्वमास्तुहिनजेतवशक्तियुक्ताः १४ धात्रीधराधरसुतेन
जगद्बिभर्त्ति आधारशक्तिरखिलंतववैबिभर्त्ति सूर्योपिभातिवरदेप्रभयायुतस्तेत्वंसर्वमे
तदखिलंविरजाविभासि १५ ब्रह्माहमीश्वरवरःकिलतेप्रभावात्सर्वेवयंजनियुतानयदा
तुनित्याः केन्येसुराःशतमखप्रमुखाश्चनित्यानित्यात्वमेवजननीप्रकृतिःपुराणा १६ त्वं
चेद्भवानिदयसेपुरुषंपुराणंजानेहमद्यतवसंनिधिगःसदैव नोचेदहंविभुरनादिरनीहई
शोविश्वात्मधीरितिनमःप्रकृतिःसदैव १७ विद्यात्वमेवननुबुद्धिमतांनराणांशक्तिस्त्वमे
वकिलशक्तिमतांसदैव त्वंकीर्त्तिकांतिकमलामलतुष्टिरूपामुक्तिप्रदाविरतिरेवमनुष्य
लोके १८ गायत्र्यसिप्रथमवेदकलात्वमेवस्वाहास्वधाभगवतीसगुणार्द्धमात्रा आम्ना
यएवविहितोनिगमोभवत्याःसंजीवनायसततंसुरपूर्वजानां १९ मोक्षार्थमेवरचयस्य
खिलंप्रपंचंतेषांगताःखलुयतोननुजीवभावं अंशाअनादिनिधनस्यकिलानघस्यपूर्णा
र्णवस्यवितताहियथातरंगाः २० जीवोयदातुपरिवेत्तितवैवकृत्यंत्वंसंहरस्यखिलमेत
दितिप्रसिद्धं नाट्यंनटेनरचितंवितथेंतरंगेकार्येकृतेविरमतेप्रथितप्रभावा २१ त्रातात्व
मेवममोह मयाद्भवाब्धेस्त्वामंबिकेसततमेमिमहार्त्तिदेच रागादिभिर्विरचितेवितथे
किलांतेमामेवपाहिबहुदुःखकरेचकाले २२ नमोदेविमहाविद्येनमामिचरणौतव स
दाज्ञानप्रकाशंमेदेहिसर्वार्थदेशिवे २३ **इतिश्रीदेवीभागवतेमहापुराणे**
**तृतीयस्कंधेचतुर्थेऽध्यायेविष्णुकृतास्तुतिःसमाप्तम्** ❖

شیو استتی اسکند ۳ - ادھیاے ۵ - صفحہ ۷۹

## अथशिवस्तुतिःप्रारभ्यते
## तृतीयस्कंधे पंचमेध्याये ५

इत्युक्त्वाविरतेविष्णौदेवदेवेजनार्द्दने उवाचशंकरःशर्वःप्रणतःपुरतःस्थितः १

**शिवउवाच॰** यदिहरिस्त्वदेवि विभावजस्त्वदनुपद्मज एव तवोद्भवः किमहमत्र न
वाप्तिनसद्गुणः सकललोकविधौचतुरेशिवे १ त्वमसिभूः सलिलंपवनस्तथा खमपिव
ह्निगुणश्चतथापुनः जननितानिपुनःकरणानिचत्वमसिबुद्धिमनोप्यथहंकृतिः २
नचविदन्तिवदन्तिचयेन्यथाहरिहराजकृतंनिखिलंजगत् नवकृतास्त्वयएवसदैवते
विरचयंतिजगत्सचराचरं ४ अवनिवायुखवह्निजलादिभिः सविषयैः सगुणैश्चजगद्भवे
त् यदिनदाकथमद्यचतत्स्फुरंप्रभवतीतितवांबकलामृते ५ भवसिसर्वमिदंसचराचरं
त्वमजविष्णुशिवाकृतिकल्पितं विविधवेषविलाससकुतूहलैर्विरमसेरमसेचयथारुचिः ६
सकललोकसिसृक्षुरहंहरिः कमलभूश्चभवामपदांबिके तवपदांबुजपांसुपरिग्रहंसमधि
गम्यतदानुचकिम ७ यदिदयार्द्रमनानसदांबिके कथमहंविहितश्चतमोगुणः कमल
जश्चरजोगुणसंभवः सुविहितः किमुसत्वगुणोहरिः यदिनतेविषमामतिरंबिके कथमिदं
बहुधाविहितंजगत् सचिवभूपतिभृत्यजनावृतंबहुधनैरधनैश्चसमाकुलं ९ तवगुणा
स्त्रयएवसदाक्षमाः प्रकटनावनसंहरणेषुवै हरिहरद्रुहिणाश्चक्रमेणत्वयाविरचितास्त्रि
जगतांकिलकारणं १० परिचितानिमयाहरिणातथाकमलजेनविमानगतेनवैपथिग
तैर्भुविनानिकृतानिचताकथयकेनभवानिनवानिच ११ सृजसिपासिजगज्जगदंबिके
स्वकलयाकियदिच्छसिनाशितुं रमयसेस्वपतिंपुरुषंसदातवगतिंनहिविद्मवयंशिवे १२
जननिदेहिपदांबुजसेवनं युवतिभावगतानपिनःसदा पुरुषतामधिगम्यपदांबुजा
द्विरहिताःकलभेमसुखंस्फुटं १३ नरुचिरस्तिममांबपदांबुजंतवविहायशिवेभवनेषु
ले निवसितुंनरदेहमवाप्यचत्रिभुवनस्यपतित्वमवाप्यवै १४ सुदतिनास्तिमनागपिमेर
तिर्युवतिभावमवाप्यतवांतिके पुरुषताक्षणलाभभवत्यलंतवपदंनयदीक्षणगोचरः १५
त्रिभुवनेषुभवत्वियमंबिकेममसदैवहिकीर्तिरनाविला युवतिभावमवाप्यपदांबुजंपरि
चितंनवसंस्मृतिनाशनं १६ भुविविहायतवांतिकसेवनंकइहवांछतिराज्यमकंटकं त्रु
टिरसौकिलयातियुगात्मतांननिकटंयदितेंघ्रिसरोरुहं १७ तपसियेनिरतामुनयोमला

त्वविहायपदांबुजपूजनं जननितेविधिनाकिलवंचिताःपरिभुवोविभवेपरिकल्पिताः
नतपसानदमेनसमाधिनानचतथाविहितैःक्रतुभिर्यथा तवपदाब्जपरागनिषेवणाद्भवति
मुक्तिरजेभवसागरात् १९ कुरुदयांदयसेयदिदेविमांकथयमंत्रमनोविरमद्भुतं समभ
वंप्रजपन्सुखितोह्यहंसुविशदंचनवार्णमनुत्तमम् २० प्रथमजन्मनिचाधिगतोमया
तदधुनानविभातिनवाक्षरः कथयमांमनुमद्यभवार्णवाज्जननितारयतारयमांस्के २१

## इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेपंचमेध्याये शिवकृताभगवतीस्तुतिःसमाप्तम् ❖

برہمہ کرت استتی اسکند ۳ - ادھیا ۵ - صفحہ ۸

## अथब्रह्मकृतस्तुतिःप्रारभ्यते
## ३ तृतीयस्कंधे पञ्चमेध्याये ५

**ब्रह्मोवाच**- इत्युक्त्वासातदादेवीशिवेनाद्भुततेजसा उच्चचारांबिकामंत्रंप्रस्फुटं
चनवाक्षरं १ तंगृहीत्वामहादेवःपरांमुदमवापह प्रणम्यचरणौदेव्यास्तत्रैवावस्थितः
शिवः २ जपन्नवाक्षरंमंत्रंकामदंमोक्षदंतथा बीजयुक्तंशुभोच्चारंशंकरस्तस्थिवांस्तदा ३
तंतथावस्थितंदृष्ट्वाशंकरंलोकशंकरं अवोचंतांमहामायांसंस्थितोहंपदान्तिके ४ नवे
दास्त्वामेवंकलयितुमिहासन्नपटवोयतस्तेनोचुस्त्वांसकलजनधात्रीमविकलां स्वाहा
भूतादेवीसकलमखहोमेषुविहितातदात्वंसर्वज्ञाजननिखलुजाताब्रिभुवने ५ कर्ता
हंप्रकरोमिसर्वमखिलंब्रह्मांडमत्यद्भुतं कोन्योस्तीहचराचरेत्रिभुवनेमत्तःसमर्थःपुमान्
धन्योस्म्यत्रनसंशयःकिलयदाब्रह्मास्मिलोकातिगो मग्नोहंभवसागरेप्रविततेगर्वाभि
वेशादिति ७ अद्याहंतवपादपंकजपरागादानगर्वेणवै धन्योस्मीतियदार्थवान्निपुणो
जातःप्रसादात्तवे याचेत्वांभवभीतिनाशचतुरांमुक्तिप्रदांचेश्वरीं हित्वामोहकृतंमहार्णव
निगडंत्वद्भक्तियुक्तंकुरु ८ अत्रेहंचजातोविमुक्तःकथंस्यांसरोजादमेयात्त्वदाविष्कृतोहे

नवाज्ञाकरःकिंकरोस्मीतिनूनंशिवेपाहिमांमोहमग्नंभवाब्धौ ९ नजानंतियेमानवास्ते
वदंतिप्रभुंमांनवाद्यंचरित्रंपवित्रं यजंतीहयेयाजकाःस्वर्गकामानतेतेप्रवामंविदंत्येव
कामं १० त्वयानिर्मितोहंविधित्वेविहारंविकर्तुंचतुर्धाविधायादिसर्गं अहंवेद्मिकोन्यो
विवेदादिमायेत्वमस्यापराधंत्वहंकारजंमे ११ अमीयेष्टधायोगमार्गेप्रवृत्ताःप्रकुर्वंतिमू
ढाःसमाधौस्थितावै नजानंतितेनाममोचप्रदंवासमुत्थापितंजातुमानर्मिवेण १२ वि
चारेपरेनत्वसंख्याविधानेपदेमोहितानामतेसंविहाय नकिंतेविमूढाभवाब्धौभवानि
त्वमेवासिसंसारमुक्तिप्रदावै १३ परंतत्त्वविज्ञानमाद्यैर्जनैर्यैर्यज्ञेचानुभूतंत्यजंत्येवने
किं निमेषार्धमात्रंपवित्रंचरित्रंशिवाचांबिकाशक्तिरीशेतिनाम १४ नकिंत्वंसमर्थासि
विश्वंविधातुंहृषीकेशवाम्भुःसर्वंचतुर्धाविभक्तं विनोदार्थमेवंविधिंनाविधायादिसर्गेकिलेदंक
रोषीतिकामं १५ हरिःपालकःकिंत्वमासोमधोर्वानथाकैटभाद्द्विनःसिंधुमध्ये हरः
संहृतःकिंत्वयासौनकालेकथंमेभुवोमध्यदेशात्सजातः १६ नतेजन्मकुत्रापिहृष्टंप्रभु
नेवाकृतःसंभवस्तेनकोपीहवेद किलाद्यासिशक्तिस्त्वमेकाभवानिस्वतंत्रैःसमस्तैरतोबो
धितासि १७ त्वयासंयुतोहंविकर्तुंसमर्थोहरिस्त्वांतमेवंत्वयासंयुतश्च हरःसंप्रहर्तुंत्व
येवेत्थमुक्तःतमानाद्यसर्वेत्वयाविप्रयुक्ताः १८ यथाहंहरिःशंकरःकिंतथान्येनजाना
नसंतीहनोवाभविष्यन् नमुह्यंतिकेस्मिन्नवात्यंतचित्रेविनोदेविवादास्पदेल्पाशया
नाम १९ अकर्तागुणास्पष्टएवाद्यदेवीनिरीहीनुपाधिःसदैवाकलश्च तथापीश्वरस्ते
विनीर्णोविनोदंस्वसंपश्यतीत्याहुरेवंविधिज्ञाः २० हृष्टाहृष्टविभेदेस्मिन्प्राक्त्वत्तोनैवपु
मान्परः नान्यःकोपितृतीयोस्तिप्रमेयेस्यविचारिते २१ नमिथ्यावेदवाक्यंवैकल्प
नीयंकदाचन विरोधोयंममात्यंतंहृदयेतुविशंकितः २२ एकमेवाद्वितीयंयद्ब्रह्मवे
दावदंतिवै साकिंत्वंवाप्यसौवाकिंसंदेहंविनिवर्तय २३ निःसंशयंनमेचेतःप्रभवत्य
विशंकितं द्वित्वैकत्वविचारेस्मिन्निमग्नंतुल्लकंमनः २४ स्वमुखेनापिसंदेहंछेत्तुम
र्हसिमामकं पुण्ययोगाच्चमेप्राप्तासंगतिस्तवपादयोः २५ पुमानसित्वंस्त्रीवासिवदवि

 

स्तत्तोमम ज्ञात्वाहंपरमांशक्तिंमुक्तःस्यांभवसागरात् ४६। ॥ ४६। इतिश्रीदे
वीभागवतेमहापुराणेऽष्टादशसाहस्र्यांसंहितायांतृतीयस्कं
धेपञ्चमेऽध्यायेब्रह्मस्तुतिःसमाप्तम् ❖

سوباہو کرت استتی اسکند ۳ - ادھیا ۲۳ - صفحہ ۱۱۸

## अथसुबाहुकृतस्तुतिःप्रारभ्यते

## ३ तृतीयस्कंधे त्रयोविंशतिमेऽध्याये २३

सुबाहुरपितद्दृष्ट्वानिधनंसंयुगेतयोः तुष्टावपरमप्रीतोदुर्गांदुर्गतिनाशनीम् १ सु
**बाहुरुवाच•** नमोदेव्यैजगद्धात्र्यैशिवायैसततंनमः दुर्गायैभगवत्यैतेकामदायै
नमोनमः २ नमःशिवायैशांत्यैतेविद्यायैमोक्षदेनमः विश्वव्याप्त्यैजगन्मातर्जगद्धात्र्यै
नमःशिवे ३ नाहंगतिंतवधियापरिचिंतयन्वैजानामिदेविसगुणाःकिलनिर्गुणायाः
किंस्तौमिविश्वजननिप्रकटप्रभावांभक्तार्तिनाशनपरांपरमांचशक्तिम् ४ वाग्देवता
त्वमसिसर्वगतैवबुद्धिर्विद्यामतिश्चगतिरप्यसिसर्वजन्तोः त्वांस्तौमिकिंत्वमसिसर्वमनो
नियंत्रीकिंस्तूयतेहिसततंखलुचात्मरूपं ५ ब्रह्माहरश्चहरिरप्यनिशंस्तुवन्तोनांतंग
ताःसुरवराःकिलतेगुणानां क्वाहंविभेदमतिरंबगुणैर्वृतोवैवक्तुंतमस्तवचरित्रमहो
प्रसिद्धः ६। सत्संगतिःकथमहोनकरोतिकामंप्रासंगिकापिविहितात्वसुचित्तशुद्धिः
जामातरस्यविहितेनसमागमेनप्राप्तंमयाद्भुतमिदंतवदर्शनंवै ७ ब्रह्मापिवांछतिस
दैवहरोहरिश्चसेन्द्राःसुराश्चमुनयोविदितार्थतत्त्वाः यद्दर्शनंजननितेद्यमयातुरापंप्राप्तं
विनादमशमादिसमाधिभिश्च ८ क्वाहंसमंदमतिरापतवावलोकंक्वेदंभवानिभवभेष
जमद्वितीयं ज्ञातासिदेविसततंकिलभावयुक्तभक्तानुकंपनपरामरवर्गपूज्या ९ किं
वर्णयामितवदेविचरित्रमेतत्यद्रक्षितोऽस्तिविषमेत्रसुदर्शनोयं शत्रूहतौसुबलिनौ
तरसात्वयायद्भक्तानुकंपिचरितंपरमंपवित्रं १० नाश्चर्यमेतदितिदेविविचारितेर्थेत्वंपा

सिसर्वमखिलंस्थिरजंगमंवै त्रातस्त्वयाचविनिहत्यरिपुंर्दयात्तस्त्रंरक्षितोयमधुनाध्रुवसंधि
स्तुः ११ भक्तस्यसेवनपरस्ययशोनिदीप्तंकर्तुंभवानिरचितंचरितंत्वयैतत् नोचेत्कथंस्व
परिगृह्यसुतांमदीयांयुद्धेभवेत्कुशलवानन्वयशीलः १२ शक्तासिजन्ममरणादिभया
न्विहंतुंकिंचित्रमत्रकिलभक्तजनस्यकामे त्वंगीयसेजननिभक्तजनैरपारात्वंपापपुण्यर
हितासगुणागुणाच १३ त्वद्दर्शनादहमहोसुकृतीकृतार्थोजातोस्मिदेविभुवनेस्वरिध
न्यजन्मा बीजंनतेनभजनंकिलवेद्मिमातर्ज्ञातस्तवाद्यमहिमाप्रकटप्रभावः १४ व्या

सउवाच एवंस्तुतातदादेवीप्रसन्नवदनाशिवा उवाचतंन्नृपंदेवीवरंवरयसुव्रत १५

**इतिश्रीदेवीभागवतेमहापुराणेतृतीयस्कंधेत्रयोविंशोध्याये सुबाहुस्तुतिःसमाप्तम् ❖**

دیوی آستتی اسکندہ-۵ ادہیاء-۱۹ صفحہ ۱۹۸

## अथदेवास्तुतिःप्रारभ्यते॰
## ५ पंचमस्कंधे एकोनविंशोध्याये १९

**देवाऊचुः** ब्रह्मासृजत्यवतिविष्णुरिदंमहेशःशक्त्यातवैवहरतेननुचांतकाले ई
शानतेपिचभवन्तितयाविहीनास्तस्मात्त्वमेवजगतःस्थितिनाशकर्त्री १ कीर्तिर्मतिः
स्मृतिगतीकरुणादयात्वंश्रद्धाधृतिश्चवसुधाकमलाजयाच पुष्टिःकलाथविजयागि
रिजाजयात्वंतुष्टिःप्रभात्वमसिबुद्धिरुमारमाच २ विद्याक्षमाजगतिकांतिरपीहमेधा
सर्वत्वमेवविदिताभुवनेत्रयेस्मिन् आभिर्विनातवतशक्तिभिराशुकर्तुंकोवाक्षमःसक
ललोकनिवासभूये ३ त्वंधारणाननुनचेदसिकूर्मनागौधर्तुंक्षमौकथमिलामथतौभ
वेताम् पृथ्वीनचेत्त्वमसिवागगनेकथंस्थास्यत्येतदखिलंबहुभारयुक्तम् ४ ये
वास्तुवन्निमनुजाश्चमरान्विमूढामायागुणैःसवचतत्र्सुरविष्णुरुद्रान् शुभ्रांसुव

द्धिमवाप्तुगणेशमुख्यान्किंत्वामृतेजननितेप्रभवन्तिकार्ये ५ येत्वद्भक्तिप्रविततेः
ल्पधियोऽबयज्ञेवह्नौसुरान्सुमधिकाम्यहविःसमृद्धम् स्वाहानचेत्त्वमसितेकथमाप्नुरद्धा
त्वामेवकिन्नहियजन्तिततोहिमूढाः ६ भोगप्रदासिभवतीहचसर्वगणांस्वांशैर्ददासि
खलुजीवनमेवनित्यं स्वीयान्सुरान्जननिपोषयसीहयद्वत्तद्वत्पुरानपितृपालयसीतिहे
तोः ७ मातःस्वयंविरचितान्विपिनेविनोदः द न्ध्यान्पलाशरहितांश्चकरूंश्चवृक्षान्
नोच्छेदयन्तिपुरुषानिपुणाःकथंचिन्नस्मात्त्वमप्यतितरांपरियासिदेत्यान् ८ यत्त्वन्नुहंसि
रणमूर्द्धनिशौरेसन्तीन्द्रदेवांगनासुरतकेलिमतिंविदित्वादेहान्तरेपिकरुणारसमाददान
नन्तेचरित्रमिदमीप्सितमस्मरणाय ९ चित्रन्तुमीयदसुभीरहितान्समंतित्वंचिन्तितेनदनुजाः
प्रथितःप्रभावाः एषांकृतेजननिदेहनिबंधनन्तेक्रीडारसस्तवनचान्यतरोऽग्रहेतुः १०
शम्भेकलावहयदुष्टतरेवकालेनत्वांभजन्तिमनुजाननुवंचितास्ते धूर्तैःपुराणचतुरैर्हरिशं
कराणांसेवापराश्चविहितास्तवनिर्मितानाम् ११ ज्ञात्वासुरांस्तववशान्सुरार्दितांश्चयेवै
भजन्तिभुविभावयुताविमृश्नान् धृत्वाकरेसुविमलंखलुदीपकन्तेकूपेपतन्तिमनुजा
विजलेहिघोरे १२ विद्यात्वमेवसुखदासुखदाचविद्यामातस्त्वमेवजननार्तिहरानरा
णाम् मोक्षार्थिभिस्तुकलिताकिलमंदधीभिर्नाराधिताजननिभोगपरैस्तथाते १३
ब्रह्माहरश्चहरिरप्यनिशंशरण्यंपादांबुजन्तवभजन्तिसुरास्तथान्ये तेहैनयेऽल्प
मतयोमनसाभजन्तिभ्रांताःपतन्तिसततंभवसागरेते १४ चण्डित्वदंघ्रिजलजो
त्थरजःप्रसादैर्ब्रह्माकरोतिसकलंभुवनंभवादौ शौरिश्चपातिखलुसंहरतेहरस्तुत्वां
सेवतेनमनुजस्त्विहदुर्भगोऽसौ १५ वाग्देवतात्वमसिदेविसुरासुराणांवक्तुंनतेऽमर
वराःप्रभवन्तिशक्ताः त्वंचेन्मुखेवससिनैवयदैवतेषांयस्माद्भवन्तिमनुजानहितद्वि
हीनाः १६ शप्तोहरिस्तुभृगुणाकुपितेनकामंमीनोऽबभूवकमठःखलुसूकरस्तु
पश्चान्नृसिंहइतियच्छलकृद्धरस्यांतांसेवतांजननिमृत्युभयन्नकिंस्यात् १७ शं
भोपपातभुविलिंगमिदंप्रसिद्धंशापेनतेनचभृगोर्विपिनेगतस्य तेयेनराभुविभजंति

कपालिनंनुतेषांस्तवंकथमिहाप्ययत्रमातः १७ योऽभूद्गजाननगणाधिपतिर्महेशा
नंयेभजन्तिमनुजावितथप्रयत्नाः जानन्तितेनसकलार्थफलप्रदात्रींत्वांदेविविश्वज
ननींस्तवसेवनीयाम् १९ चित्रंत्वयारिजनतापिदयार्द्रभावाद्धत्वारणेशितशरैर्गमि
ताद्युलोकम् नोचेत्स्वकर्मनिचितेनिरयेनितान्तंदुःखातिदुःखगतिमापदमाप्यतेस्मा २०
ब्रह्माहरश्चहरिरप्युतगर्वभावाज्जानन्तितेपिविबुधानतवप्रभावम् कन्येभवंतिमनु
जाविदितंसमर्थासम्मोहितास्तवगुणैरमितप्रभावैः २१ क्लिश्यन्तितेपिमुनयस्तवदु
र्विभाव्यपादांबुजन्नहिभजन्तिविमूढचित्ताः सूर्याग्निसेवनपराःपरमार्थतत्त्वंज्ञा
त्वान्नैःश्रुतिशतैरपिवेदसारम् २२ मन्येगुणास्तवभुविप्रथितप्रभावाःकुर्वन्तियेहि
दिनुखान्ननुमुक्तिभावान् लोकान्कुबुद्धिरचितैर्विविधागमैश्च विष्णवीशभास्करगणे
शपरांविधाय २३ कुर्वन्तियेनवपदाब्धिसुखान्नराःस्मान्स्वोक्तागमैर्हरिहरार्चनभक्तियो
गैः तेषांनकुप्यसिदयांकुरुषेविकेत्वंनान्मोहमेत्रनिपुणान्प्रथयस्यलंच २४ तुर्येयु
गेभवतिचातिबलंगुणस्यतुर्यस्यतेनमयितान्यसदागमानि त्वांगोपयन्तिनिपुणाःक
वयःकलौचेत्त्वत्कल्पितान्सुरगणानपिसंस्तुवन्ति २५ ध्यायंतिमुक्तिफलदांभुवियो
गसिद्धांविद्यांपरांचमुनयोतिविशुद्धसत्त्वाः तेनाप्नुवन्तिजननीजठरेतुदुःखंधन्यास्त
एवमनुजास्त्वयियेविलीना २६। चिच्छक्तिरस्तिपरमात्मनितेनसोपिव्यक्तीजगत्सु
विदितोभवकृत्यकर्त्ता कोन्यस्त्वयाविरहितःप्रभवत्यमुष्मिन्कर्तुंविहर्त्तुमपिसंचलि
तुस्वशक्त्या २७ तत्त्वानिचिद्विरहितानिजगद्विधातुंकिंवात्तिमानिजगदंबयतोजडानि
किंचेन्द्रियाणिगुणकर्मयुतानिसन्तिदेवित्वयाविरहितानिफलंप्रदातुम् २८ देवामखे
षुपितरोमुनिभिःस्वभागंगृह्णीयुरेवविधिवत्प्रतिमादितंकिम् स्वाहानचेत्त्वमसितत्र
निमित्तभूतातस्मात्त्वमेवननुपालसीवविश्वम् २९ सर्वंत्वयेदमखिलंविहितंभवादे
स्वंपासिवैहरिहरप्रमुखान्दिगीशान् कालेत्सिविश्वमपितेचरितंभवाद्याजानन्तिनैव
मनुजाःकुतुमंदभाग्याः ३० हत्वासुरंमहिषरूपधरंमहोग्रंमातस्त्वयासुरगणाकिल

रक्षितोयम् कांतेस्तुतिं जननि मंदधियो विदामो वेदागतिं तव यथार्थतया न जग्मुः ३१ कार्यं कृतं जगति नो यदसौ पुरात्मा वैरी हतो भुवनकंटकदुर्विभाव्यः कीर्तिः कृता ननु जगत्सु कृपा विधेया यस्मांश्च पाहि जनविश्रुथितप्रभावे ३२ **इति श्रीदेवीभागवते महापुराणे पंचमस्कंधे एकोनविंशोध्याये देवकृता स्तुतिः समाप्तम्** ❖

دیوتاؤں کی کہی ہوئی استتی جہاماپرت اسکندہ ۵۔ ادھیا ۲۲۔ صفحہ ۲۰۳

## अथ देवकृता देवीस्तुतिर्लिख्यते·

## ५ पंचमस्कंधे त्रयोविंशोध्याये २३

**देवा ऊचु·** नमो देवि विश्वेश्वरि प्राणनाथे सदानंदरूपे सुरानंददे ते नमो दानवांतप्रदे मानवानामनेकार्थदे भक्तिगम्यस्वरूपे १ न ते नाम सं— व्याप्त ते रूपमीदृक्तया कोपि वेदादिदेवादिरूपे त्वमेवासि सर्वेषु शक्तिस्वरूपा प्रजासृष्टिसंहारकाले सदैवं २ स्मृतिस्त्वं धृतिस्त्वं त्वमेवासि बुद्धिः जरा पुष्टितुष्टी धृतिः कांतिशांती सुविद्या सुलक्ष्मीर्गतिः कीर्तिमेधे त्वमेवासि विश्वस्य बीजं पुराणम् ३ यदा यैः स्वरूपैः करोषीह कार्यं सुराणां च तेभ्यो नमो मोदशान्त्यै क्षमा योगनिद्रा दया त्वं विवक्षा स्थिता सर्वभूतेषु शस्तैः स्वरूपैः ४ कृतं कार्यमादौ त्वया यत्सुराणां हतोसौ महारिर्मदान्धो हयारिः दया ते सदा सर्वदेवेषु देवि प्रसिद्धा पुराणेषु वेदेषु गीता ५ किमत्रास्ति चित्रं यदंबा सुतं स्वं मुदा पालयेत्पोषयेत्साम्यगेव यतस्त्वं जनित्री सुराणां सहाया कुरुष्वैकचित्तेन कार्यं समग्रम् ६ न वा ते गुणानामियत्तां स्वरूपं वयं देवि जानीमहे विश्ववंद्ये कृपापात्रमित्येव मत्वा तथास्मान्भयेभ्यः सदा पाहि पातुं समर्थे ७ विना बाणपातैर्विना मुष्टिघातैर्विना शूलखड्गैर्विना शक्तिदंडैः रिपून्हंतुमेवासि शक्ता विनोदात्तथापीह लोकोपकाराय लीला ८ इदं शाश्वतं नैव जानन्ति मूढा न कार्यं विना कारणं संभवेद्वा वयं तर्कया

मीत्नुमानप्रमाणैस्त्वमेवासिकर्त्र्यस्यविश्वस्यचेति ९ अजःसृष्टिकर्तामुकुन्दोऽविता
यंहरोनाशकर्त्तेपुराणेप्रसिद्धः नकिन्त्वत्प्रसूतास्त्रयस्तेयुगादौत्वमेवासिसर्वस्यते
नैवमाता १० त्रिभिःस्त्वंपुराराधितादेविदत्तात्वयाशक्तिरुग्राचतेभ्यःसमग्रा
त्वयासंयुतास्तेप्रकुर्वन्तिकामंजगत्पालनोत्पत्तिसंहारमेव ११ नकिन्त्वमंदमतयो
यतयोविमुक्त्यैत्वांयेनविश्वजननींसमुपाश्रयन्ति विद्यांपरांसकलकामफल
प्रदानांमुक्तिप्रदांविबुधवृंदसुवंदितांकिम् १२ येवैस्मरंतिपापयुताश्चसोरादंभा
स्तएवप्रतिभांतिनूनं ध्यायन्तिनत्वांकमलांचलज्जांकांतिंस्थितिंकीर्तिमथापि
पुष्टिम् १३ हरिहरादिभिरप्यथसेवितात्वमिहदेववरैरसुरैस्तथा भुविभजन्तिन
येल्पधियोनराजननितेविधिनाखलुवंचिताः १४ जलधिजापदपंकजरंज
नेजलरसेनकरोतिहरिःस्वयम् त्रिनयनोपिधराधरजांघ्रिपंकजपरागनिषेवण
तत्परः १५ किमपरस्यनरस्यकथानकैस्तवपदाब्जयुगंनभजन्तिके विगतरागगृहा
श्चदयांतमांक निधियोमुनयोपिभजन्तिते १६ देवित्वदंघ्रिभजनेनजनारतायेसं
सारकूपपतितापतिताःकिलामी तेकुष्ठगुल्मशिरसाधियुताभवन्ति दारिद्र्यदैन्यसहि
तारहितास्तुषैषैः १७ येकाष्ठभारवहनेपवसावहारेकार्येभवन्तिनिपुणाधनदभ्रही
नाजानीमहेल्पमतिभिर्भवदंघ्रिसेवापूर्वेभवेजननितैर्नकृताकदापि १८ **इति**
**श्रीदेवीभागवतेमहापुराणेपंचमस्कंधेत्रयोविंशतिमेध्यायेदेवकृतास्तुतिःसमाप्तम्** ✣ ✣

دیوا ستتی مہاماپاپرت اسکند ۶ - ادھیا ۵ - صفحہ ۲۲۸

## अथदेवकृताभगवतीस्तुतिःप्रारंभः

॥ षष्ठस्कंधे षष्ठेध्याये ॥

**देवाऊचुः** देविप्रसीदपरिपाहिसन्ननतान्नवृत्रासुरेणसमरेपरिपीडितांश्च दीना

र्तिनाशनपरेपरमार्थतत्त्वेश्रान्तास्त्वदंघ्रिकमलेशरणंसदैव १ त्वंसर्वविश्वजननी
परिपालयास्मान्पुत्रानिवातिपतितान्रिपुसंकटेस्मिन् मातर्नतेस्त्वविदितंभुवनत्र
येपिकस्मादुपेक्षसिसुरान्सुरसन्नमान् २ त्रैलोक्यमेतदखिलंविहितंत्वयैवब्रह्माह
रिःपशुपतिस्तववामनोत्थाःकुर्वन्तिकार्यमखिलंस्ववशाननेत्वंभ्रूभंगचालनवशाद्वि
हरन्तिकामम् ३ मानास्तुलान्परिभवान्परिपानिदीनान्रीतिस्त्वयैवरचिताप्रकटाप
राधान् कस्मान्नपालयसिदेविविनापराधानस्मांस्त्वदंघ्रिशरणान्करुणारसाब्धे ४
नूनंमदंघ्रिभजनात्सपदाकिलैतेभक्तिंविहायविभवेसुखभोगलुब्धाः नेमेकटाक्षवि
षयाइतिचेत्तवैवारीतिस्तुतेजननिकर्त्तरिचापहृष्टा ५ दोषोननोत्रजननिप्रतिभाति
चित्तेयत्तेविहायभजनंविभवेनिमग्नाः मोहस्त्वयाविरचितःप्रभवत्यसौनस्तस्मात्त्वभा
वकरणोदयसेकथंन्न ६ सर्वंत्वयाजननिदैत्यपतिर्निरोधापादितोमहिषरूपधरः
किलाजौ अस्मन्कृतेसकललोकभयावहन्तंहत्वेकथंनभयदंविधुनोषिमातः ७
शुंभस्तथापिबलवाननुजोनिशुंभस्तौभ्रातरौतदनुगानिहतानहतौच वृत्रंतथाजहिख
लंप्रबलंदयार्द्रमन्नविमोहयययथानभवेद्यथासौ ८ त्वंपालयाद्यविबुधानसुरेणप्रा
तःसन्तापितानतितरांभयविह्वलांश्च नान्योस्तिकोपिभुवनेषुसुरार्तिहन्तायःक्ले
शजालमखिलंनिदहेत्स्वशक्त्या ९ वृत्रेदयातवयदिप्रथितातथापिजह्येनमाशु
जनदुःखकरंखलंच पापाःसमुद्धरभवानिशरैःपुनानानोचेत्प्रयास्यतितमोननुदु
ष्टबुद्धिः १० तेप्रापिताःसुरबलंविबुधारयोयेहत्वारणेपिविशिखैःकिलयाविना
ते ज्ञानानकिंनिरयपातभयाद्दयार्द्रेयद्वृत्रवोपिनहिकिंविनिहंसिहन्त्रम् ११ जानी
महेरिपुरसौनवसेवकोनप्रायेणपीडयतिनःकिलपापबुद्धिः यस्तावकस्त्विहभवे
दमरान्सोकिंत्वत्पादपंकजरतान्ननुपीडयेद्धा १२ कूर्मैःकथंजननिरञ्जनमद्यानें
वपुष्यादिकंनवविनिर्मितमेवयस्मात् मंत्रावयंचसकलेपरशक्तिरूपंतस्माद्भवानिच
रणेप्रणतास्मिन्नूनम् १३ धन्यास्तएवमनुजाहिभजन्तिभक्त्यापादांबुजंतवभवा

ब्जिजलेषुयोतम् ययोगिनोपिमनसासततंस्मरन्तिमोक्षार्थिनोविगतरागविकारमो
हाः १४ येयज्ञिकाःसकललोकविदोपिनूनंत्वांसंस्मरन्तिसनतंकिलहोमकालेस्वाहां
त्वत्रिजननीमखुरेश्वराणां भूयःस्वधांपितृगणस्यचतृप्तिहेतुम् १५ मेधासिकांति
रसिशांतिरपिप्रसिद्धाबुद्धिस्त्वमेवविशदार्थकरीनराणाम् सर्वंत्वमेवविभवंभुवनत्रयेऽ
स्मिन्कृत्वाददासिभजतांकृपयासदैव १६ **इतिश्रीदेवीभागवतेमहा
पुराणेषष्टस्कंधेषष्टेध्यायेदेवकृतास्तुतिरियंसमाप्तम्**

منو استتی دیوی پرت اسکند ۸ ادھیاۓ ۲ صفحہ ۳۸

## अथमनुकृतास्तुतिर्लिख्यते॰
## ८ अष्टमस्कंधे द्वितीयेध्याये २

**मनुरुवाच॰** नमोनमस्तेदेवेशिजगत्कारणकारणे शंखचक्रगदाहस्तेनारा
यणहृदाश्रिते १ देहमूर्तेजगन्मातःकारणस्थानरूपिणि वेदत्रयप्रमाणस्तेसर्वदेव
नुतेशिवे २ माहेश्वरिमहाभागेमहामायेमहोदये महादेवप्रियावासेमहादेवप्रियंक
रि ३ गोपेंद्रस्यप्रियेज्येष्ठेमहानंदेमहोत्सवे महामारीभयहरेनमोदेवादिपूजिते ४
सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके शरण्येत्र्यम्बकेदेविनारायणिनमोस्तुते ५
यन्त्वांदयाविष्णुमोनंत्रोनंचसर्वदा चैतन्यमेकमाद्यन्तरहिंतंतेजसान्निधि ६ ब्रह्मा
यदीक्षणात्सर्वंकरोतिचहरिःसदा पालयत्यपिविश्वेशःसंहर्तायदनुग्रहात् ७ मधुकैट
भसंभूतभयार्तःपद्मसंभवः यस्याःस्तवेनमुमुचेघोरदैत्यभवांबुधेः ८ त्वंह्रीःकीर्तिः
स्मृतिःकान्तिःकमलागिरिजासती दमायणीवेदगर्भाबुद्धिदात्रीसदाभया ९ स्तो
ष्येत्वांचनमस्यामिपूजयामिजपामिच ध्यायामिभावयेवीक्ष्येश्रोष्येदेवीप्रसीदमे १०
ब्रह्मावेदनिधिःकृष्णोलक्ष्म्यावासःपुरंदरः त्रिलोकाधिपतिःपाशोयादसांपतिरुत्त

मः ११ कुवेरोनिधिनाथोभूद्यमोजातःपरेतराट् नैर्ऋतोरक्षसान्नाथःसोमोजा
तोह्यपोमयः १२ त्रिलोकवंद्यलोकेशिमहामांगल्यरूपिणि नमस्तेस्तुपुनर्भूयोज
गन्मातर्नमोनमः १३ इतिश्रीदेवीभागवतेमहापुराणेऽष्टमस्कं
धस्यद्वितीयेध्यायेमनुकृतास्तुतिःसमाप्तमस्तुभम् ❖
शुभमस्तुसर्वजगताम् ॥

سرستی کوچ - متعلقہ دھیار ۴ - سکند ۹ - سریمد دیوی بھگوت صفحہ ۱۴۸

# ॐश्रीगणेशायनमः

## ९ नवमस्कंधे चतुर्थाध्याये सरस्वतीकवचं·

**नारायणउवाच** कवचंशृणुविप्रेंद्रयद्दत्तंब्रह्मणापुरा विश्वस्रष्टाविश्वजयं
भृगवेगन्धमादने १ **भृगुरुवाच** ब्रह्मन्ब्रह्मविदांश्रेष्ठब्रह्मज्ञानविशारद सर्व
ज्ञसर्वजनकसर्वेशसर्वपूजित २ सरस्वत्याश्चकवचंब्रूहिविश्वजयंप्रभो अयातया
ममंत्राणांसमूहसंयुतंपरं ३ **ब्रह्मोवाच** शृणुवत्सप्रवक्ष्यामिकवचंसर्वकामदं
श्रुतिसारंश्रुतिसुखंश्रुत्युक्तंश्रुतिपूजितं ४ उक्तंकृष्णेनगोलोकेमह्यंवृंदावनेवने रा
सेश्वरेणविभुनारासेवैरासमंडले ५ अतीवगोपनीयंचकल्पवृक्षसमंपरं अश्रुताद्भु
तमंत्राणांसमूहैश्चसमन्वितं ६ यद्धृत्वाभगवाञ्छुक्रःसर्वदैत्येषुपूजितः यद्धृत्वा
पठनाद्ब्रह्मन्बुद्धिमांश्चबृहस्पतिः ७ पठनाद्धारणाद्वाग्मीकवींद्रोवाल्मीकोमुनिः
स्वायंभुवोमनुश्चैवयद्धृत्वासर्वपूजितः ८ कणादोगौतमःकण्वःपाणिनिःशाक
टायनः ग्रंथंचकारयद्धृत्वादक्षःकात्यायनःस्वयं ९ धृत्वावेदविभागंचपुराणान्य
खिलानिच चकारलीलामात्रेणकृष्णद्वैपायनःस्वयं १० शातातपश्चसंवर्तोवसिष्ठ
श्चपराशरः यद्धृत्वापठनाद्ग्रंथंयाज्ञवल्क्यश्चकारसः ११ ऋष्यशृंगोभरद्वाजश्चास्ति
कोदेवलस्तथा जैगीषव्योथयायातिश्चधृत्वासर्वत्रपूजिताः १२ कवचस्यास्यविप्रेंद्र
ऋषिरेवप्रजापतिः स्वयंछंदश्चबृहतीदेवताशारदांबिका १३ सर्वतत्वपरिज्ञानसर्वा
र्थसाधनेषुच कवितासुचसर्वासुविनियोगःप्रकीर्तितः १४ श्रींह्रींसरस्वत्यैस्वाहा
शिरोमेपातुसर्वतः श्रींवाग्देवतायैस्वाहाभालंमेसर्वदावतु १५ ॐह्रींसरस्वत्यैस्वाहे
तिश्रोत्रेपातुनिरंतरं ॐश्रींह्रींभगवत्यैसरस्वत्यैस्वाहानेत्रयुग्मंसदावतु १६ ऐंह्रीं
वाग्वादिन्यैस्वाहानासांमेसर्वदावतु ॐह्रींविद्याधिष्ठातृदेव्यैस्वाहाचोष्ठंसदावतु १७

ऊँश्रींह्रींब्राह्म्यैस्वाहेतिदंतपंक्तिंसदावतु ऐमित्येकाक्षरोमंत्रोममकंठंसदावतु १९
ऊँश्रींह्रींपातुमेग्रीवांस्कंधौमेश्रींसदावतु ऊँह्रींविद्याधिष्ठातृदेव्यैस्वाहावक्षःसदावतु
ऊँह्रींविद्यास्वरूपायैस्वाहामेपातुनाभिकं ऊँह्रींक्लींवाण्यैस्वाहेतिममहस्तौसदावतु २०
ऊँसर्ववर्णात्मिकायैपादयुग्मंसदावतु ऊँवागधिष्ठातृदेव्यैस्वाहासर्वंसदावतु २१ स
र्वकंठवासिन्यैस्वाहाप्राच्यांसदावतु ऊँसर्वजिह्वाग्रवासिन्यैस्वाहाग्निदिशिरक्षतु २२
ऊँऐंह्रींश्रींक्लींसरस्वत्यैबुधजनन्यैस्वाहा सततंमंत्रराजोयंदक्षिणेमांसदावतु २३ऊँ
ऐंह्रींश्रीं त्र्यक्षरोमंत्रोनैर्ऋत्यांसर्वदावतु ऊँऐंजिह्वाग्रवासिन्यैस्वाहामांवारुणेवतु २४
ऊँसर्वाम्बिकायैस्वाहावायव्येमांसदावतु ऊँऐंश्रींह्रींगंधवासिन्यैस्वाहामामुत्तरेवतु २५
ऐंसर्वशास्त्रवासिन्यैस्वाहेशान्यांसदावतु ऊँह्रींसर्वपूजितायैस्वाहाचोर्ध्वंसदावतु २६
ह्रींपुस्तकवासिन्यैस्वाहाधोमांसदावतु ऊँग्रंथबीजस्वरूपायैस्वाहामांसर्वतोवतु २७
इतितेकथितंविप्रब्रह्ममंत्रौघविग्रहं इदंविश्वजयंनामकवचंब्रह्मरूपकं २८ पुरा
श्रुतंधर्मवक्त्रात्पर्वतेगंधमादने तवस्नेहान्मयाख्यातंप्रवक्तव्यंनकस्यचित् २९ गुरु
मभ्यर्च्यविधिवद्वस्त्रालंकारचंदनैः प्रणम्यदंडवद्भूमौकवचंधारयेत्सुधीः ३० पंचल
क्षजपेनैवसिद्धंतुकवचंभवेत् यदिस्यात्सिद्धकवचोबृहस्पतिसमोभवेत् ३१ महावाग्मी
कवींद्रश्चत्रैलोक्यविजयीभवेत् शक्नोतिसर्वंजेतुंचकवचस्यप्रसादतः ३२ इदंचकाण्व
शाखोक्तंकवचंकथितंमुने स्तोत्रंपूजाविधानंचध्यानंचवन्दनंशृणु ३३ इतिश्री
देवीभागवतेमहापुराणेसरस्वतीकवचंसमाप्तम् ॥

سرستی ستوتر۔ متعلقہ ادھیاء ۵۔ اسکندہ ۹۔ دیوی بھاگوت صفحہ ۳۸۲

## अथसरस्वतीस्तोत्रं·
## पंचमेअध्याये नवमस्कंधे ॥

श्रीनारायणउवाच वाग्देवतायाःस्तवनंश्रूयतांसर्वकामदं महामुनिर्याज्ञ

वल्क्योयेनतुष्टावतांपुरा १ गुरुशापाच्चसमुनिर्हतविद्योबभूवह तदाजगामदुःखा
र्त्तोरविस्थानंसुपुण्यदं २ संप्राप्यतपसासूर्यंलोलार्केदृष्टिगोचरे तुष्टावसूर्यंशोकेनरु
रोदचमुहुर्मुहुः ३ सूर्यस्तंपाठयामासवेदवेदांगमीश्वरः उवाचस्तौहिवाग्देवींभक्त्याच
स्मृतिहेतवे ४ तमित्युक्त्वादीननाथोप्यंतर्धानंचकारसः मुनिःस्नात्वाचतुष्टावभक्ति
नम्रात्मकंधरः ५ **याज्ञवल्क्यउवाच** कृपांकुरुजगन्मातर्मामेवंहततेजसम्
गुरुशापात्स्मृतिभ्रष्टंविद्याहीनंचदुःखितं ६ ज्ञानंदेहिस्मृतिंविद्यांशक्तिंशिष्यप्रबो
धिनीं ग्रंथकर्तृत्वशक्तिंचसुशिष्यंसुप्रतिष्ठितं ७ प्रतिभांसत्सभायांचविचारक्षमतांशु
भां लुप्तंसर्वंदैवयोगान्नवीभूतंपुनःकुरु ८ यथांकुरंभस्मनिचकरोतिदेवतापुनः ब्र
ह्मस्वरूपापरमाज्योतीरूपासनातनी ९ सर्वविद्याधिदेवीयातस्यैवाण्यैनमोनमः वि
सर्गबिंदुमात्रासुयदधिष्ठानमेवच १० तदधिष्ठात्रीयादेवीतस्यैनित्यंनमोनमः व्या
ख्यास्वरूपासादेवीव्याख्याधिष्ठातृरूपिणी ११ ययाविनाप्रसंख्यावान्संख्यांकर्तुंन
शक्यते कालसंख्यास्वरूपायातस्यैदेव्यैनमोनमः १२ भ्रमसिद्धांतरूपायातस्यैदे
व्यैनमोनमः स्मृतिशक्तिज्ञानशक्तिबुद्धिशक्तिस्वरूपिणी १३ प्रतिभाकल्पनाशक्तिर्या
चतस्यैनमोनमः सनत्कुमारोब्रह्माणंज्ञानंपप्रच्छयत्रवै १४ बभूवमूकवत्सोपिसिद्धांतं
कर्तुमक्षमः तदाजगामभगवानात्माश्रीकृष्णईश्वरः १५ उवाचसचतांस्तौहिवाणी
मिष्टांप्रजापते सचतुष्टावतांब्रह्माचाज्ञयापरमात्मनः १६ चकारतत्प्रसादेनतदा
सिद्धांतमुत्तमं यदाप्यनंतंपप्रच्छज्ञानमेकंवसुंधरा १७ बभूवमूकवत्सोपिसिद्धांतं
कर्तुमक्षमः तदातांसचतुष्टावसंत्रस्तःकश्यपाज्ञया १८ ततश्चकारसिद्धांतंनिर्म
लंभ्रमभंजनं व्यासःपुराणसूत्रंचपप्रच्छवाल्मीकिंयदा १९ मौनीभूतश्चसस्मार
तामेवजगदंबिकां तदाचकारसिद्धांतंतद्वरेणमुनीश्वरः २० संप्राप्यनिर्मलंज्ञानं
भ्रमांधध्वंसदीपकं पुराणसूत्रंश्रुत्वाचव्यासःकृष्णकलोद्भवः २१ तांशिवांवेदद
ध्यौचशतवर्षंचपुष्करे तदात्वत्तोवरंप्राप्यसत्कवींद्रोबभूवह २२ तदावेदविभागं

चतुर्णांचचकारसः यदामहेन्द्रःपप्रच्छतत्त्वज्ञानंसदाशिवं २३ क्षणंतामेवसंचिन्त्य तस्मैज्ञानंददौविभुः पप्रच्छशब्दशास्त्रंचमहेंद्रश्चबृहस्पतिं २४ दिव्यंवर्षसहस्रंचस त्वांदध्यौचपुष्करे तदात्वत्तोवरंप्राप्यदिव्यवर्षसहस्रकं २५ उवाचशब्दशास्त्रंचतदर्थं चसुरेश्वरं अध्यापिताश्चयेशिष्यायैरधीतंमुनीश्वरैः २६ तेचतांपरिसंचिन्त्यप्रवर्त्तन्ते सुरेश्वरीं त्वंसंस्तुतापूजिताचमुनींद्रैर्मनुमानवैः २७ दैत्येंद्रैश्चसुरैश्चापिब्रह्म विष्णुशिवादिभिः जडीभूतःसहस्रास्यःपंचवक्त्रश्चतुर्मुखः २८ यांस्तोतुंकिमहंस्तौ मितामेकास्येनमानवः इत्युक्त्वायाज्ञवल्क्यश्चभक्तिनम्रात्मकंधरः २९ प्रणनाम निराहारोरुरोदचमुहुर्मुहुः ज्योतीरूपामहामायातेनदृष्टाप्युवाचतं ३० सुकवींद्रो भवेत्युक्त्वावैकुंठंचजगामह याज्ञवल्क्यकृतंवाणीस्तोत्रमेतत्तुयःपठेत् ३१ सकवींद्रो महावाग्मीबृहस्पतिसमोभवेत् महामूर्खश्चदुर्बुद्धिर्वर्षमेकंयदापठेत् ३२ सपंडित श्चमेधावीसुकवींद्रोभवेद्ध्रुवं ३३ **इतिश्रीदेवीभागवतेनवमस्कंधेपंच मेअध्यायेसरस्वतीस्तोत्रम् समाप्तः ॥ ❖**

پرتھوی ستوتر - متعلقہ ادھیاے ۹ - اسکندھ ۹ - سری دیوی بھاگوت صفحہ ۳۹۴

## अथपृथ्वीस्तोत्रंप्रारभ्यते·
## ९ नवमस्कंधे ९ नवमाअध्याय·

**नारायणउवाच·** स्तवनंश्रृणुविप्रेंद्रकाण्वशाखोक्तमेवच जयेजयेजलाधारे जलशीलेजयप्रदे १ यज्ञसूकरजायेचजयंदेहिजयावहे मंगलेमंगलाधारेमांगल्ये मंगलप्रदे २ मंगलार्थंमंगलेशेमंगलंदेहिमेभवे सर्वाधारेचसर्वज्ञेसर्वशक्तिसमन्वि ते ३ सर्वकामप्रदेदेविसर्वेष्टंदेहिमेभवे पुण्यस्वरूपेपुण्यानांबीजरूपेसनातनि ४ पुण्याश्रयेपुण्यवतामालयेपुण्यदेभवे सर्वसस्यालयेसर्वसस्याढ्येसर्वसस्यदे ५ स र्वसस्यहरेकालेसर्वसस्यात्मिकेभवे भूमेभूमिपसर्वस्वेभूमिपालपरायणे ६ भूमिपा

नोस्तुत्वंकरोम्भूमिदेहिकृपानिधे इदंस्तोत्रंमहापुण्यंप्रातःकाल्यायःपठेत् ७ को
टिजन्मसुसंभवेत्बलवान्भूमिपेश्वरः भूमिदानकृतंपुण्यंलभ्यतेपठनाज्जनैः ८
भूमिदानहरात्पापान्मुच्यतेनात्रसंशयः अंबूवाचीभूकरणपापान्समुच्यतेध्रुवम् ९ अन्य
कूपेकूपखननपापान्समुच्यतेध्रुवम् परभूमिहरात्पापान्मुच्यतेनात्रसंशयः १० भूमौवी
र्यत्यागपातभूमौदीपादिस्थापनात् पापेनमुच्यतेसोपिस्तोत्रस्यपठनान्मुने ११ अश्व
मेधशतेपुण्यंलभतेनात्रसंशयः भूमिदेव्यामहास्तोत्रंसर्वकल्याणकारकम् १२ इति

**श्रीदेवीभागवतेनवमस्कंधेनवमेध्यायेभूमिस्तोत्रंसमाप्तम्**

گنگا استوتر ـ متعلقہ ادھیا ۱۲ ـ اسکندہ ۹ ـ سریدیوی بھاگوت صفحہ ۸۰۰

## ॐअथगंगास्तोत्रम्

## नवमस्कंधे ९ द्वादशोध्याय १२

**नारदउवाच॰** श्रोतुमिच्छामिदेवेशलक्ष्मीकांतजगत्पते विष्णोविष्णुपदेस्तोत्रंप
पुण्यंपुण्यकारकं १ **श्रीनारायणउवाच** शृणुनारदवक्ष्यामिपापघ्नंपुण्यका
रणं शिवसंगीतसंमुग्धश्रीकृष्णांगसमुद्भवां २ राधांगद्रवसंयुक्तांतांगंगांप्रणमा
म्यहम् यज्जन्मसृष्टेरादौचगोलोकेरासमंडले ३ सन्निधानेशंकरस्यतांगंगांप्रणमा
म्यहम् ४ गोपैर्गोपीभिराकीर्णेशुभेराधामहोत्सवे कार्तिकीपूर्णिमायांचतांगंगांप्र
णमाम्यहं ५ कोटियोजनविस्तीर्णांदैर्घ्येलक्षगुणाततः समावृतायागोलोकेतांगं
गांप्रणमाम्यहं ६ षष्टिलक्षयोजनायाततोदैर्घ्येचतुर्गुणा समावृतायावैकुंठेतां
गंगांप्रणमाम्यहं ७ त्रिंशल्लक्षयोजनायादैर्घ्येपंचगुणाततः आवृताब्रह्मलोकेयातां
गंगांप्रणमाम्यहं ८ त्रिंशल्लक्षयोजनायादैर्घ्येचतुर्गुणाततः आवृताशिवलोकेया
तांगंगांप्रणमाम्यहं ९ लक्षयोजनविस्तीर्णादैर्घ्येसप्तगुणाततः आवृताध्रुवलोकेया

तांगंगांप्रणमाम्यहं १० लक्षयोजनविस्तीर्णादैर्घ्ये पंचगुणाततः आवृताचेंद्रलोके यातांगंगांप्रणमाम्यहं ११ षष्टिसहस्रयोजनायादैर्घ्येदशगुणाततः आवृतासूर्यलोकेयातांगंगांप्रणमाम्यहं १२ लक्षयोजनविस्तीर्णादैर्घ्येपंचगुणाततः आवृतायातपोलोकेतांगंगांप्रणमाम्यहं १३ सहस्रयोजनायामादैर्घ्येदशगुणाततः आवृताजनलोकेयातांगंगांप्रणमाम्यहं १४ दशलक्षयोजनायादैर्घ्येपंचगुणाततः आवृतायामहर्लोकेतांगंगांप्रणमाम्यहं १५ सहस्रयोजनायामादैर्घ्येशतगुणाततः आवृतायाचकैलासेतांगंगांप्रणमाम्यहं १६ शतयोजनविस्तीर्णादैर्घ्येदशगुणाततः मंदाकिनीयेंद्रलोकेतांगंगांप्रणमाम्यहं १७ पातालेभोगवतीचैवविस्तीर्णादशयोजना ततोदशगुणादैर्घ्येतांगंगांप्रणमाम्यहं १८ क्रोशैकमात्रविस्तीर्णाततःक्षीणाचकुत्रचित् क्षितौचालकनंदायातांगंगांप्रणमाम्यहं १९ सत्येयाक्षीरवर्णाचत्रेतायामिंदुसन्निभा द्वापरेचंद्राभायातांगंगांप्रणमाम्यहं २० जलप्रभाकलौयाचनान्यत्रपृथिवीतले स्वर्गेचनित्यंक्षीराभातांगंगांप्रणमाम्यहं २१ यत्तोयकणिकास्पर्शेपापिनांज्ञानसंभवः ब्रह्महत्यादिकंपापंकोटिजन्मार्जितंदहेत् २२ इत्येवंकथितात्रह्मन्गंगापद्यैकविंशतिः स्तोत्ररूपंचपरमंपापघ्नंपुण्यजीवनं २३ नित्यंयोहिपठेद्भक्त्यासंपूज्यचसुरेश्वरीं सोऽश्वमेधफलंनित्यंलभतेनात्रसंशयः २४ अपुत्रोलभतेपुत्रंभार्याहीनोलभेत्स्त्रियं रोगात्प्रमुच्यतेरोगीबंधान्मुक्तोभवेद्ध्रुवं २५ अस्पष्टकीर्त्तिःसुयशामूर्खोभवतिपंडितः यःपठेत्प्रातरुत्थायगंगास्तोत्रमिदंशुभम् २६ शुभंभवेद्दुःस्वप्नेगंगास्नानफलंलभेत् **श्रीनारायणउवाच** स्तोत्रेणानेनगंगाचस्तुत्वाचैवभगीरथः २७ जगामतांगृहीत्वाचयत्रनष्टाश्चसागराः वैकुंठंतेययुस्तूर्णंगंगायाःस्पर्शवायुना २८ भगीरथेनसानीतातेनभागीरथीस्मृता २९ **इतिश्रीदेवीभागवतेनवमस्कंधेद्वादशोध्यायेश्रीगंगास्तोत्रंसमाप्तम् ॥**

تُلسی استوتر ـ متعلقہ ادھیارہ ۲۵ ـ اسکندہ ۹ ـ سریدیوی بھاگوت صفحہ ۳۰۰

# अथ तुलसीस्तोत्रं प्रारभ्यते
## ९ नवमस्कंधे पंचविंशतिमे २५ अध्याये

**नारद उवाच.** किं ध्यानं स्तवनं किं वा किं वा पूजाविधानकं तुलस्याश्च महाभाग तन्मे व्याख्यातुमर्हसि १ **नारायण उवाच** अंतर्हितायां तस्यां च हरिर्वृंदावने तदा तस्याश्च के स्तुतिं गत्वा तुलसीविरहातुरः २ **भगवानुवाच** वृंदरूपाश्च वृक्षाश्च यदैकत्र भवंति च विदुर्बुधास्तेन वृंदां मत्प्रियां तां भजाम्यहम् ३ पुरा बभूव या देवी त्वादौ वृंदावने वने तेन वृंदावनी ख्याता सत्प्रियां तां भजाम्यहं ४ असंख्येषु च विश्वेषु पूजिता या निरंतरं तेन विश्वपूजिताख्या पूजितां च भजाम्यहं ५ असंख्यानि च विश्वानि पवित्राणि यया सदा तां विश्वपावनीं देवीं विरहेण भजाम्यहं ६ देवा न तुष्टाः पुष्पाणां समूहेन यया विना तां पुष्पसारां शुद्धां च द्रष्टुमिच्छामि शोकतः ७ विश्वे यत्प्राप्तिमात्रेण भक्तानंदो भवेद्ध्रुवं नंदनी तेन विख्याता सा प्रीता भवताद्धि हि ८ यस्या देव्यास्तुला नास्ति विश्वेषु निखिलेषु च तुलसी तेन विख्याता तां यामि शरणं प्रियां ९ कृष्णजीवनरूपा सा शश्वत्प्रियतमा सती तेन कृष्णजीवनीसा सा मे रक्षतु जीवनं १० इत्येवं स्तवनं कृत्वा तस्थौ तत्र रमापतिः ददर्श तुलसीं साक्षात्पादपद्मनतां सती ११ रुदंतीमवमानेन मानिनीं मानपूजितां प्रियां दृष्ट्वा प्रियः शीघ्रं वासयामास वक्षसि १२ भारत्याज्ञां गृहीत्वा च स्वालयं च ययौ हरिः भारत्या सह तत्प्रीतिं कारयामास सत्वरं १३ वरं विष्णुर्ददौ तस्यै सर्वपूज्या भवेरिति शिरोधार्या च सर्वेषां वंद्या मान्या ममेति च १४ विष्णोर्वरेण सा देवी परितुष्टा बभूव च सरस्वती तामाकृष्य वासयामास सन्निधौ १५ लक्ष्मीर्गंगा सस्मिता च तां समाकृष्य नारद गृहं प्रवेशयामास विनयेन सती सदा १६ वृंदा वृंदावनी विश्वपूजिता विश्वपावनी पुष्पसारा नंदनी च तु

लसीकृष्णजीवनी १७ एतन्नामाष्टकंचैवलोकेनामार्थसंयुतं यःपठेत्तांचसंपूज्यसोऽश्वमेधफलंलभेत् १८ कार्त्तिकीपूर्णिमायांचतुलस्याजन्ममंगले तत्रतस्याश्चपूजाचविहिताहरिणापुरा १९ तस्यांयःपूजयेत्तांचभक्त्याचविश्वपावनीं सर्वपापाद्विनिर्मुक्तोविष्णुलोकंसगच्छति २० कार्त्तिकेतुलसीपत्रंयोददातिचविष्णवे गवामयुतदानस्यफलंप्राप्नोतिनिश्चितं २१ अपुत्रोलभतेपुत्रंप्रियाहीनोलभेत्प्रियां बंधुहीनोलभेद्बंधुंस्तोत्रश्रवणमात्रतः २२ रोगीप्रमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् भयान्मुच्येतभीतस्तुपापान्मुच्येतपातकी २३ इतिश्रीभागवतेनवमस्कंधेपंचविंशेऽध्यायेतुलसीस्तोत्रंसमाप्तम् ❖ ❖

ساوتری ستوتر۔ متعلقہ ادھیائے ۲۶۔ اسکندھ ۹۔ سری دیوی بھاگوت صفحہ ۸۳۴

## अथसावित्रीस्तोत्रम्
## नवमस्कंधे ९ षड्विंशतिमेऽध्याये २६

**नारायणउवाच** माध्यंदिनोक्तंस्तोत्रंचसर्वकामवरप्रदं विप्रजीवनरूपंचनिबोधकथयामिते १ कृष्णेनदत्तासावित्रीगोलोकेब्रह्मणेपुरा नायातिसातेनसार्द्धंब्रह्मलोकेचनारद २ ब्रह्माकृष्णाज्ञयाभक्त्यातुष्टाववेदमातरं तदातांपरितुष्टावब्रह्माणंचकमेपतिं ३ **ब्रह्मोवाच** सच्चिदानंदरूपेत्वंमूलप्रकृतिरूपिणी हिरण्यगर्भरूपेत्वंप्रसन्नाभवसुंदरि ४ तेजःस्वरूपेपरमेपरमानंदरूपिणि द्विजातीनांजातिरूपेप्रसन्नाभवसुंदरि ५ नित्येनित्यप्रियेदेविनित्यानंदस्वरूपिणि सर्वमंगलरूपेचप्रसन्नाभवसुंदरि ६ सर्वस्वरूपेविप्राणांमंत्रसारेपरात्परे सुखदेमोक्षदेविप्रप्रसन्नाभवसुंदरि ७ विप्रपापेध्मदाहायज्वलदग्निशिखोपमे ब्रह्मतेजःप्रदेदेविप्रसन्नाभवसुंदरि ८ कायेनमनसावाचायत्पापंकुरुतेनरः तत्वत्स्मरणमात्रेणभस्मीभूतंभविष्यति ९ इत्युक्त्वाजगतांधातातत्रैवतत्र

चस्तत्र सावित्रीब्रह्मणासार्धंब्रह्मलोकंजगामसा १० अनेनस्तवराजेनसंस्तूयाश्वप निर्नृपः ददर्शतांचसावित्रींवरंप्रापमनोगतं ११ स्तवराजमिमंपुण्यंसंध्यांकृत्वाचयःपठेत् पाठेचतुर्णांवेदानांयत्फलंलभतेचतत् १२ **इतिश्रीदेवीभागवतेनवमस्कंधेषड्विंशेध्यायेसावित्रीस्तोत्रंसमाप्तम्** ❖ ❖

یم استوتر متعلقہ ادھیاۓ ۳۱ اسکندہ ۹ شریدیوی بھاگوت صفحہ ۸۴۸

## अथयमस्तोत्रंप्रारभ्यते॰

## नवमस्कंधे ९ एकत्रिंशेअध्याये ३१

इत्युक्त्वाचसतीब्रह्मन्भक्तिनम्रात्मकंधरा तुष्टावधर्मराजंचवेदोक्तेनस्तवेनच १ **सावित्र्युवाच** तपसाधर्ममाराध्यपुष्करेभास्करःपुरा धर्मंसूर्यःसुतंप्रापधर्मराजंनमाम्यहं २ समतासर्वभूतेषुयस्यसर्वस्यसाक्षिणः अतोयन्नामशमनमितितंप्रणमाम्यहं ३ येनांतश्चकृतोविश्वेसर्वेषांजीविनांपरं भावनुरूपंचकालेनतंकृतांतंनमाम्यहं ४ बिभर्तिदंडंदंडायपापिनांशुद्धिहेतवे नमामितंदंडधरंयःशास्तासर्वजीविनां ५ विश्वंचकलयत्येवयःसर्वेषुचसंततं अतीवदुर्निवार्यंचतंकालंप्रणमाम्यहं ६ तपस्वीब्रह्मनिष्ठोयःसंयमीसंजितेंद्रियः जीवानांकर्मफलदस्तंयमंप्रणमाम्यहं ७ स्वात्मारामश्चसर्वज्ञोमित्रंपुण्यकृतांभवेत् पापिनांक्लेशदोयस्तंपुण्यमित्रंनमाम्यहं ८ यज्जन्मब्रह्मणोंशेनज्वलंतंब्रह्मतेजसा योध्यायतिपरंब्रह्मतमीशंप्रणमाम्यहं ९ इत्युक्त्वासाचसावित्रीप्रणनामयमंमुने य[illegible]तांशक्तिभजनंकर्मपाकसुवाचह १० इदंयमाष्टकंनित्यंप्रातरुत्थाययःपठेत् यमात्तस्यभयंनास्तिसर्वपापात्प्रमुच्यते ११ महापापीयदिपठेत्नित्यंभक्तिसमन्वितः यमःकरोतितंशुद्धंकायव्यूहेननिश्चितं १२ **इतिश्रीदेवीभागवतेनवमस्कंधेएकत्रिंशेऽध्यायेयमस्तोत्रंसमाप्तम् शुभम्** ❖ ❖

لکشمی استوتر - متعلقہ ادھیار ۴۲ - اسکندہ ۹ - سریدیوی بھاگوت صفحہ ۴۷۸

# अथलक्ष्मीस्तोत्रंप्रारभ्यते
## ९ नवमस्कंधे द्विचत्वारिंशोध्याये ४२

दृष्ट्वाजगत्त्रयस्येशगतांतुष्टावतांपुरंदरः पुलिकंचितसर्वांगःसाश्रुनेत्रःकृतांजलिः १ ब्रह्मणाचप्रदत्तेनस्तोत्रराजेनसंयुतः सर्वाभीष्टप्रदेनैववेदिकेनैवतत्त्वच २ पुरंदरउवाच नमःकमलवासिन्यैनारायण्यैनमोनमः कृष्णप्रियायैसततंमहालक्ष्म्यैनमोनमः पद्मपत्रेक्षणायैचपद्मास्यायैनमोनमः पद्मासनायैपद्मिन्यैवैष्णव्यैचनमोनमः ४ सर्वसंपत्स्वरूपिण्यैसर्वाद्यैतेनमोनमः हरिभक्तिप्रदात्र्यैचहर्षदात्र्यैनमोनमः ५ कृष्णवक्षःस्थितायैचकृष्णेशायैनमोनमः चंद्रशोभास्वरूपायैरत्नपद्मेचशोभने ६ संपत्त्यधिष्ठातृदेव्यैमहादेव्यैनमोनमः नमोवृद्धिस्वरूपायै वृद्धिदायैनमोनमः ७ वैकुंठेयामहालक्ष्मीर्यालक्ष्मीःक्षीरसागरे स्वर्गलक्ष्मीरिंद्रगेहेराजलक्ष्मीर्नृपालये ८ गृहलक्ष्मीश्चगृहिणांगेहेयागृहदेवता सुरभिःसागरेजातादक्षिणायज्ञकामिनी ९ अदितिर्देवमातात्वंकमलाकमलालया स्वाहात्वंचहविर्दानेकव्यदानेस्वधास्मृता १० त्वंहिविष्णुस्वरूपाचसर्वाधाराचसंधरा शुद्धसत्वस्वरूपात्वंनारायणपरायणा ११ क्रोधहिंसावर्जिताचवरदाशारदाशुभा परमार्थप्रदात्वंचहरिदास्यप्रदापरा १२ ययाविनाजगत्सर्वंभस्मीभूतमसारकं जीवन्मृतंचविश्वंचशश्वत्सर्वंययाविना १३ सर्वेषांचपरामातासर्वबांधवरूपिणी धर्मार्थकाममोक्षाणांत्वंचकारणरूपिणी १४ यथामाताक्तनांधानांशिशूनांशैशवेसदा तथात्वंसर्वदामातासर्वेषांसर्वरूपतः १५ मातृहीनःस्तनांधस्तुसचजीवतिदैवतः त्वयाहीनोजनःकोपिनजीवत्येवनिश्चितं १६ सुप्रसन्नस्वरूपात्वंमांप्रसन्नाभवांबिके वैरिग्रस्तंचविषयंदेहिमह्यंसनातनि १७ अ

हयावत्वयाहीनोबंधुहीनश्चभिक्षुकः सर्वसंपद्विहीनश्चतावदेवहरिप्रिये १८ ज्ञानं देहिचधर्मंचसर्वसौभाग्यमीप्सितं प्रभावंचप्रतापंचसर्वाधिकारमेवच १९ जयंपराक्रमंयुद्धेपरमैश्वर्यमेवच इत्युक्त्वाचमहेंद्रश्चसर्वैःसुरगणैःसह २० प्रणनामसाश्रुनेत्रोमूर्ध्नाचैवपुनःपुनः देवेभ्यश्चवरंदत्वापुष्पमालांमनोहरां २१ केशवायददौलक्ष्मीःसंतुष्टासुरसंसदि ययुर्देवाश्चसंतुष्टाःस्वंस्वंस्थानंचनारद २२ देवीययौहरेःस्थानंहृष्टाक्षीरोदशायिनः ययतुश्चैवस्वगृहंब्रह्मेशानौचनारद २३ दत्वाशुभाशिषंतौचदेवेभ्यःप्रीतिपूर्वकं इदंस्तोत्रंमहापुण्यंत्रिसंध्यंयःपठेन्नरः २४ कुवेरतुल्यःसभवेत्राजराजेश्वरोमहान् पंचलक्षजपेनैवस्तोत्रसिद्धिर्भवेन्नृणां २५ सिद्धिःस्तोत्रंयदिपठेन्मासमेकंतुसंततं महासुखीचराजेंद्रोभविष्यतिनसंशयः २६ **इतिश्रीदेवीभागवतेनवमस्कंधेद्विचत्वारिंशोऽध्यायेलक्ष्मीस्तोत्रंसमाप्तम्**

سواہا استوتر - متعلقہ ادھیار ۴۳ - اسکندہ ۹ - سریمد دیوی بھاگوت صفحہ ۱۸۸

## अथस्वाहास्तोत्रंप्रारभ्यते·
## ९नवमस्कंधे त्रिचत्वारिंशोऽध्याये ४३

**वह्निरुवाच·** स्वाहावह्निप्रियावह्निजायासंतोषकारिणी शक्तिःक्रियाकालदात्री परिपाककरीध्रुवा गतिःसदानराणांचदाहिकादहनक्षमा संसारसाररूपाचघोरसंसारतारिणी २ देवजीवनरूपाचदेवपोषणकारिणी षोडशैतानिनामानियःपठेद्भक्तिसंयुतः ३ सर्वसिद्धिर्भवेत्तस्यइहलोकेपरत्रच नागहीनंभवेत्तस्यसर्वकर्मसुशोभनम् ४ अपुत्रोलभतेपुत्रंभार्याहीनोलभेत्प्रियां रंभोपमांस्वकामिनींचसंप्राप्यसुखमाप्नुयात् ५ **इतिश्रीदेवीभागवतेनवमस्कंधेत्रिचत्वारिंशोऽध्यायेस्वाहास्तोत्रंसमाप्तम्** ❖ ❖

سودھا استوتر - متعلقہ ادھیار ۴۴ - اسکندہ ۹ - سریمد دیوی بھاگوت صفحہ ۴۸۳

## अथस्वधास्तोत्रप्रारम्भः
## ९ नवमस्कंधे चतुश्चत्वारिंशेऽध्याये ४४

स्तोत्रंशृणुमुनिश्रेष्ठब्रह्मपुत्रविशारद सर्ववांछाप्रदंनृणांब्रह्मणायत्कृतंपुरा १ नारायणउवाच॰ स्वधोच्चारणमात्रेणतीर्थस्नायीभवेन्नरः मुच्यतेसर्वपापेभ्योवाजपेयफलंलभेत् २ स्वधास्वधास्वधेत्येवंयदिवारत्रयंस्मरेत् श्राद्धस्यफलमाप्नोतिबलेश्चतर्पणस्यच ३ श्राद्धकालेस्वधास्तोत्रंयःशृणोतिसमाहितः सलभेतश्राद्धसंभूतंफलमेवनसंशयः ४ स्वधास्वधास्वधेत्येवंत्रिसंध्यंयःपठेन्नरः प्रियांविनीतांसलभेत्साध्वींपुत्रगुणान्वितां ५ पितॄणांप्राणतुल्यात्वंद्विजजीवनरूपिणी श्राद्धाधिष्ठातृदेवीचश्राद्धादीनांफलप्रदा ६ नित्यात्वंसत्यरूपासिपुण्यरूपासिसुव्रते आविर्भावतिरोभावौसृष्टौचप्रलयेतव ७ ॐस्वस्तिश्चनमःस्वाहास्वधात्वंदक्षिणातथा निरूपिताश्चतुर्वेदैःप्रशस्ताकर्मिणांपुनः ८ कर्मपूर्त्यर्थमेवैताईश्वरेणविनिर्मिताः इत्येवमुक्त्वासब्रह्माब्रह्मलोकेस्वयंसदि ९ तस्योचसहसासद्यःस्वधासाविर्बभूवह तदापितृभ्यःप्रददौतामेवकमलाननां १० तांसंप्राप्यययुस्तेवपितरश्चप्रहर्षिताः स्वधास्तोत्रमिदंपुण्यंयःशृणोतिसमाहितः ११ सस्नातःसर्वतीर्थेषुवांछितंफलमाप्नुयात् १२ इतिश्रीदेवीभागवतेनवमस्कंधे ४४ अध्यायेस्वधास्तोत्रम्

دکشنا استوتر - متعلقہ ادھیار ۴۵ سکندہ ۹ - سریمد دیوی بھاگوت

## अथदक्षिणास्तोत्रप्रारंभः
## नवमस्कंधे पंचचत्वारिंशेऽध्याये ४५

दक्षिणाख्यस्ययज्ञस्यध्यानंस्तोत्रंपूजाविधिक्रमं १ तत्सर्वंकाण्वशाखोक्तंप्रवक्ष्यामिनिशाम
य पुरासंप्राप्यतांयज्ञः कर्मदक्षांचदक्षिणां २ मुमोहास्याःस्वरूपेणतुष्टावकामकातरः

**यज्ञउवाच** पुरागोलोकगोपीत्वंगोपीनांप्रवरावरा राधासमानतत्सखीचश्रीकृष्णप्रे
यसीप्रिया ४ कार्तिकीपूर्णिमायांतुरासेराधामहोत्सवे आविर्भूतादक्षिणांशात्तस्मा
त्त्वन्नामदक्षिणा ५ गोलोकेत्वंसुशीलेतिख्याताशीलेनशोभने लक्ष्मीदत्तांसभागात्वंरा
धाशापाच्चदक्षिणा ६ गोलोकात्त्वंपरिभ्रष्टाममभाग्यादुपस्थिता कृपांकुरुमहाभा
गेमामेवस्वामिनंकुरु ७ सर्वेषांकर्मिणांदेवीत्वमेवफलदासदा त्वयाविनाचसर्वेषांसर्वं
कर्मचनिष्फलं ८ त्वयाविनातथाकर्मकर्मिणांचनशोभने ब्रह्मविष्णुमहेशाश्चदिक्पा
लादयएवच ९ कर्मणश्चफलंदातुंनशक्ताश्चत्वयाविना कर्मरूपीस्वयंब्रह्माफलरूपी
महेश्वरः १० यज्ञरूपीविष्णुरहंत्वमेषांसाररूपिणी फलदातृपरंब्रह्मनिर्गुणप्रकृतिः
परा ११ स्वयंकृष्णश्चभगवान्नचशक्तस्त्वयासह त्वमेवशक्तिःकान्तेमेशश्वज्जन्मनिजन्म
नि १२ सर्वकर्मणिशक्तोहंत्वयासहवरानने इत्युक्त्वाचपुरस्तस्थौयज्ञाधिष्ठातृदेवता १३
तुष्टाबभूवसादेवीभेजेतंकमलाकला इदंचदक्षिणास्तोत्रंयज्ञकालेचयःपठेत् १४
फलंचसर्वयज्ञानांप्राप्नोतिनात्रसंशयः राजसूयेवाजपेयेगोमेधेनरमेधके १५ अश्व
मेधेलांगलेचविष्णुयज्ञेयशस्करे धनदेभूमिदेपूर्तेफलदेगजमेधके १६ लोहयज्ञेस्व
र्णयज्ञेरत्नयज्ञेयनामके शिवयज्ञेरुद्रयज्ञेशक्रयज्ञेचबंधुके १७ वृष्टौवरुणयागेचकंड
केवैरिमर्दने शुचियज्ञेधर्मयज्ञेऽध्वरेचपापमोचने १८ ब्रह्माणीकर्मयागेचयोनियागे
चभद्रके एतेषांचसमारंभेइदंस्तोत्रंचयःपठेत् १९ निर्विघ्नेनचतत्कर्मसर्वंभवतिनिश्चि
तम् २० **इतिश्रीदेवीभागवतेनवमस्कंधेपंचचत्वारिंशोऽध्याये**
**दक्षिणास्तोत्रंसमाप्तम्** ❖ ❖

کهستی دیوی استوتر - متعلقه ادهیاء ۴۶ - اسکنده ۹ - سریمد دیوی بهاگوت

# अथषष्ठीदेवसेनास्तोत्रप्रारंभः

## ९ नवमस्कंधे षट्चत्वारिंशोऽध्याये ४६।

स्तोत्रंशृणुमुनिश्रेष्ठसर्वकामशुभावहं वांछाप्रदंचसर्वेषांगूढंवेदेषुनारद १ प्रियव्रतउवाच॰ नमोदेव्यैमहादेव्यैसिद्ध्यैशांत्यैनमोनमः शुभायैदेवसेनायैषष्ठ्यैदेव्यैनमोनमः २ वरदायैपुत्रदायैधनदायैनमोनमः सुखदायैमोक्षदायैषष्ठ्यैदेव्यैनमोनमः ३ षष्ठ्यैषष्ठांशरूपायैसिद्धायैचनमोनमः मायायैसिद्धयोगिन्यैषष्ठ्यैदेव्यैनमोनमः ४ सारायैशारदायैचपरादेव्यैनमोनमः बालाधिष्ठातृदेव्यैचषष्ठीदेव्यैनमोनमः ५ कल्याणदायैकल्याण्यैफलदायैचकर्मणां प्रत्यक्षायैस्वभक्तानांषष्ठ्यैदेव्यैनमोनमः ६ पूज्यायैस्कंदकांतायैसर्वेषांसर्वकर्मसु देवरक्षणकारिण्यैषष्ठीदेव्यैनमोनमः ७ शुद्धसत्वस्वरूपायैवंदितायैनृणांसदा हिंसाक्रोधवर्जितायैषष्ठीदेव्यैनमोनमः ८ धनंदेहिप्रियांदेहिपुत्रंदेहिसुरेश्वरि मानंदेहिजयंदेहिद्विषोजहिमहेश्वरि ९ धर्मंदेहियशोदेहिषष्ठीदेव्यैनमोनमः देहिभूमिंप्रजांदेहिविद्यांदेहिसुपूजिते १० कल्याणंचजयंदेहिषष्ठीदेव्यैनमोनमः इतिदेवींचसंस्तूयलेभेपुत्रंप्रियव्रतः ११ यशस्विनंचराजेंद्रषष्ठीदेव्याःप्रसादतः षष्ठीस्तोत्रमिदंब्रह्मन्यःशृणोतिवत्सरं १२ अपुत्रोलभतेपुत्रंवरंसुचिरजीविनं वर्षमेकंचयोभक्त्यासंपूज्येदंशृणोतिच १३ सर्वपापाद्विनिर्मुक्तोमहावंध्याप्रसूयते वीरंपुत्रंचगुणिनंविद्यावन्तंयशस्विनं १४ सुचिरायुष्यवन्तंचसूतेदेवीप्रसादतः काकवंध्याचयानारीमृतवत्साचयाभवेत् १५ वर्षंश्रुत्वालभेत्पुत्रंषष्ठीदेवीप्रसादतः रोगयुक्तेचबालेचपितामाताशृणोतिच १६। मासेनमुच्यतेबालःषष्ठीदेवीप्रसादतः १७ इति श्रीदेवीभागवतेषष्ठीस्तोत्रंसमाप्तम् ❖

منگل چنڈی استوتر- متعلقہ ادھیار ۴۷- اسکند ۵- ۹- سریدیوی بھاگوت

# अथमंगलचंडीस्तोत्रप्रारम्भः

